# नाजिक

# नीलकण्ठी

## भाषाटीका

प्रकाशक—

श्री ठाकुर प्रसाद पुस्तक भण्डार

कचौड़ीगली · वाराणसी।

फलित-ज्योतिषशास्त्रग्रन्थः

श्रीनीलकण्ठाचार्यविरचिता

# ताजिक-नीलकण्ठी

श्रीविश्वनाथदैवज्ञविरचितसंस्कृतटीकया

तथा

## सविशेषोपपत्ति-सोदाहरण-भाषाभावार्थेन सहिता

*

पण्डितश्रीसीतारामशर्मणोऽन्तेवासिना

श्रीकाशीज्योतिर्वित्समितिमन्त्रि-

## दैवज्ञवाचस्पति-श्रीवासुदेवगुप्तेन

प्रतिसंस्कृता

*

प्रकाशक :

श्री ठाकुर प्रसाद पुस्तक भण्डार

कचौड़ीगली, वाराणसी-१

[ मूल्यम् १००/=

२००४ ई० ]

# प्राक्कथनम्

सिद्धान्तसंहिता-होरारूपं स्कन्धत्रयात्मकम् ।
वेदस्य निर्मलं चक्षुर्ज्योतिश्शास्त्रमकल्मषम् ॥
विनैतदखिलं श्रौतं स्मार्तं कर्म न सिद्ध्यति ।
तस्माज्जगद्धितायेदं ब्रह्मणा निर्मितं पुरा ॥

यत्र खगोल-भगोल-ग्रहगोल भूगोलानां स्थितिवर्णनं, ग्रहाणां चारोदयास्तादिकथनं स सिद्धान्तस्कन्धः, यतस्तत्र निश्चयात्मकं ज्ञानं भवति । यत्र च ग्रहयोगोदयास्तादीनां शुभाऽशुभफलकथनं स फलितस्कन्ध इति कथ्यते ।

फलितस्कन्धः संहिता, जातकं चेति द्विधा । यत्र सामान्येन प्राणिनां फलानि सा संहिता, यत्र च जन्मसमयवशात् प्राणिनां पृथक्-पृथक् फलानि तज्जातकमिति कथ्यते । सर्वत्र फलज्ञानं लग्नवशादेव भवति यथोक्तं—भास्कराचार्येण—

"ज्योतिश्शास्त्रफलं पुराणगणकैरादेश इत्युच्यते ।
नूनं लग्नबलाश्रितः पुनरयम् ॥

मानवानां जीवनपर्यन्तं शुभाऽशुभफलज्ञानं जन्मलग्नवशेन तथा च सदसद्-ग्रहाणां महादशान्तर्दशा-प्रत्यन्तर्दशा-विदशोपदशादि-समयवशेन च भवतीति सर्वसामान्यम् ।

यवनज्योतिषाचार्यैस्तु—यथा जन्मसमयलग्नवशात् जीवनफलं, तथैव वर्षा-रम्भसमयलग्नवशात् वर्षफलं, मासारम्भलग्नवशान्मासफलं, दिनारम्भलग्नवशाद् दिनफलं विलक्षणं भवति इति स्वानुसन्धानानुभवेन निश्चितम् । जन्मलग्नवशात् फलं नैसर्गिकं तथा वर्षाद्यारम्भकालिकं फलं, तात्कालिकं विलक्षणं मत्वा

उभयथा फलं विलोक्य उभयत्र शुभत्वे शुभं, अशुभत्वे त्वशुभं, मिश्रे मिश्रफलं कथितमित्यत एव वर्षाधारम्भसमयफलं 'तात्कालिकं' ( यवनभाषया ताजिकं ) निगद्यते ।

बहुभिराचार्यैः कृतास्ताजिकग्रन्था अपि विविधास्तेषु 'नीलकण्ठेन कृतत्वा-न्नीलकण्ठी'ति नामकग्रन्थः श्रेष्ठतमः सर्वैः स्वीक्रियते । अतएव सर्वे प्रान्तीयपरीक्षा-ध्यक्षैः पाठ्यग्रन्थेषु निर्धारितः ।

यद्यपि ग्रन्थेऽस्मिन् श्लोकाः सुबोधार्था एव सन्ति तथापि बालावबोधार्थं दैवज्ञविश्वनाथेन सोदाहरण-सरलसंस्कृतभाषाटीकां कृत्वाऽध्येतृजना उपकृता इति विदितमेव सर्वेषाम् ।

कालेनात्र मूले टीकायां च लेखकाध्यापकाध्येतृजनप्रमादाद् बह्व्योऽशुद्धयो जातास्तत् संशोधनार्थं काशीस्थ-श्रीठाकुरप्रसादगुप्तेन प्रार्थितोऽहं यथामति समूलं सटीकग्रन्थोऽयं संशोधितः ।

आशासे चानेनाध्येतृवर्ग उपकृतो भविष्यति भविष्यति च ममापि परिश्रमः सफलः । अन्ते निवेदनमिदम् यदत्र मानवधर्माद् दृग्दोषाद् वा या काचित् त्रुटिरवशिष्टा सा क्षन्तव्या गुणैकदृग्भिर्विद्वद्भिरिति ।

विनीतो—

वासुदेवः

# ताजिकनीलकण्ठीस्थ-विषयानुक्रमणिका

इति वर्षतन्त्रं समाप्तम्

—०—

श्रीः

# ताजिकनीलकण्ठी

संस्कृत-हिन्दी-टीकाद्वयोपेता

•

मङ्गलाचरणम्

**नतेन वासुदेवेन नत्वा गणपतिं गुरुम् ।**
**सटीका नीलकण्ठीयं यत्नतः परिशोध्यते ॥**

चण्डीकुण्डलमाकलय्य कुतुकादण्डाभशुण्डाग्रगं
कृत्वा ताण्डवडम्बरे पशुपतेः खेलन् खलूच्छृङ्खलम् ।
चण्डांशोरिव मण्डलं तदपरं सन्दर्शयन्नम्बरे
हेरम्बो जगदम्बिकां विहसयन् वः श्रेयसे गर्जताम् ॥ १ ॥

दिवाकरो नाम बभूव विद्वान्दिवाकराभो गणितेषु मन्ये ।
स्वकल्पितैर्येन विवृद्धवृन्दैर्वृद्धं जगद्दर्शितविश्वरूपम् ॥ २ ॥
तस्यात्मजा पञ्च समा बभूवुः पञ्चेन्द्रकल्पा गणितागमेषु ।
पञ्चाननावादिगजेन्द्रभेदे पञ्चाग्निकल्पा द्विजकर्मणा च ॥ ३ ॥

अजनिष्ट कृष्णनामा ज्येष्ठस्तेषां कनिष्ठानाम् ।
विद्यानवद्यवाचां वेत्ता जगतः सदाचारी ॥ ४ ॥
तस्माज्जातः कनिष्ठो विबुधगणश्रेष्ठतां प्राप जाग्र-
ज्ज्योतिःशास्त्रेण शश्वत्प्रकटितविभवा यस्य शिष्यप्रशिष्याः ।
विष्णुज्योतिर्विदुर्वीपतिविदितगुणा भूमिदर्वीकरेन्द्रे
ग्रन्थव्याख्यानखर्वीकृतविबुधगुरुर्गर्वहा गर्वभाजाम् ॥ ५ ॥

आसीदासिन्धुदासीकृतगणकगणग्रामणीगर्वभेत्ता
वेत्ता ग्रन्थान्तराणामतिगुरुरनुजस्तस्य कस्याप्यजेयः ।
मल्लारिर्वारिवृन्दप्रशमनविधये कोऽपि मल्लारिनामा
व्यक्ताव्यक्तप्रवक्ता जगति विशदयत्सर्वसिद्धान्तवेत्ता ॥ ६ ॥

तस्याऽनुजः केशवनामधेयो ज्योतिर्विदानन्दसमुद्रचन्द्रः ।
वाणीप्रवीणो वचनामृतेन सञ्जीवयामास कलाविलासी ॥ ७ ॥
यस्यानुजः सम्प्रति विश्वनाथो विष्णुप्रसादाद्गुणमात्रजिष्णुः ।
सर्वज्ञदैवज्ञविलासिविज्ञो नृसिंहकः साधितसर्वविद्यः ॥ ८ ॥

आसीद्वेदान्तवेत्ता स्मृतिनिगमपटुर्ग्रामणीगर्वभेत्ता
कर्त्ता ग्रन्थान्तराणां फणिपतिनिगमस्यापि वेत्ता विकाशि।
वक्ता श्रीनीलकण्ठात्मजभजनपटुर्नीलकण्ठः स चक्रे
संज्ञातन्त्रं दुरूहं सकलशुभदशादुर्दशादर्शभूतम् ॥ ९ ॥
गोदातीरस्थगोलाभिधपुरवसतिः पार्थदेशैकभूषा
संज्ञातन्त्रस्य टीकां व्यदधदभिनवां गद्यपद्यानवद्याम्।
शश्वद्विश्वोपकृत्यै विशदतरतया दैवविद्विश्वनाथो
ग्रन्थोग्रन्थिप्रभेत्ता ग्रहगणितविदामग्रगण्योऽप्यगर्वः ॥ १० ॥

## संज्ञातन्त्रे ग्रहाध्यायः ( १ )

निर्विघ्नग्रन्थसमाप्त्यर्थं मङ्गलमाचरंश्चिकीर्षितं प्रतिजानीते--

**प्रणम्य हेरम्बमथो दिवाकरं गुरोरनन्तस्य तथा पदाम्बुजम्।**
**श्रीनीलकण्ठो विविनक्ति सूक्तिभिस्तत्ताजिकं सूरिमनःप्रसादकृत ॥१॥**

श्रीनीलकंठस्तत्ताजिकं तत्पूर्वाचार्योक्तं ताजिकं सूक्तिभिः सदुक्तिभिर्नानाछन्दोभिर्वा विविनक्ति प्रकटीकरोति। कथंभूतं ताजिकं सूरिमनः-प्रसादकृत् सूरयः पण्डितास्तेषां मनः अंतःकरणं तस्य प्रसादकृत् एतद्ग्रन्थावलोकनेन पंडितमनः प्रसन्नं भवतीत्यर्थः। किं कृत्वा हेरम्बं गणपतिं प्रणम्य। पुनः किं कृत्वा दिवाकरं सूर्यं प्रणम्य पुनः किं कृत्वा अनन्तदैवज्ञाख्यगुरोः पदाम्बुजं प्रणम्य ॥ १ ॥

मैं ( नीलकण्ठ ) पूर्व आचार्यों के बनाये ताजिक ग्रन्थों का मन्थन करके विविध प्रकार के छन्दों में 'ताजिकनीलकण्ठी' नामक ग्रन्थ की रचना करता हूँ। इसे पढ़कर ज्योतिषशास्त्र के पण्डितों का चित्त प्रसन्न होगा। इस ग्रन्थ की रचना का कार्य प्रारम्भ करने के पहले मैं श्रीगणेशजी तथा अपने गुरु अनन्त नामक दैवज्ञ को प्रणाम करता हूँ ॥ १ ॥

अथ द्वादशराशिस्वरूपमाह--

**पुमांश्चरोऽग्निः सुदृढश्चतुष्पाद्रक्तोष्णपित्तोऽतिरवोऽद्रिरुग्रः।**
**पीतो दिनं प्राग्विषमोदयोऽल्पसङ्गप्रजो रूक्षनृपः समोऽजः ॥२॥**

पुमान् पुरुषराशिः चरश्चरसंज्ञकः अग्निरग्निराशिः सुदृढः दृढांगः चतुष्पाच्चतुश्चरणः रक्तः आरक्तवर्णः उष्णः उष्णस्वभावः अतिरवो महाशब्दः अद्रिः पर्वतचारी उग्रः क्रूरः पीतः पीतवर्णः दिनं दिवाबली प्राक्

पूर्वदिक्स्वामी विषमोदय: अल्पसंगप्रज: अल्पस्त्रीसंगोऽल्पप्रजश्च रूक्ष: कांति-रहित: नृप: क्षत्रियवर्णं सम: समांग: अजो मेष: एवंगुणविशिष्टो ज्ञेय:, अयं राशिर्द्विवर्ण:, आरक्तवर्ण:, पीतवर्णश्च मेषसिंहधन्विनामेव वर्णद्वयमुक्तं कुत: समरसिंहेनोक्तत्वात् ।। २ ।।

अब बारहों राशियों का स्वरूप बताते हुए पहले मेष राशि का स्वरूप बताते हैं— मेष राशि पुरुष जाति की है, चरसंज्ञक स्वभाव है । अग्नि तत्त्व है । यह बहुत दृढ़ है । इसके चार चरण हैं । लाल-पीला वर्ण है । रक्तोष्ण प्रकृति है । इसका शब्द बड़ा उग्र होता है । यह पर्वतचारी है । स्वभाव का क्रूर है । दिन के समय यह विशेष बलवान् रहता है । पूर्व दिशा का स्वामी है । इसका उदय विषम ( तिरछा ) है । यह स्त्री का संग बहुत कम करता है और इनकी सन्तानें भी थोड़ी हैं । यह कांतिहीन रहता है । क्षत्रिय वर्ण है । इनके सभी अंग सम हैं । उपरोक्त लक्षण मेष राशि के जानने चाहिये ।

विशेष—समरसिंह के कथनानुसार इस मेष राशि के लाल और नीले ये दोनों वर्ण हैं । बारहों राशियों में मेष, सिंह और धनु ये ही तीन राशियाँ ऐसी हैं कि जिनके दो वर्ण कहे गये हैं । बाकी सब राशियों के एक ही वर्ण कहे गये हैं ।। २ ।।

अथ वृषराशिस्वरूपमाह—

**वृषः स्थिरः स्त्रीक्षितिशीतरुक्षो याम्येट् सुभूर्वायुनिशाचतुष्पात् ।**
**श्वेतोऽतिशब्दो विषमोदयश्च मध्यप्रजासङ्गशुभोऽपि वैश्यः ॥३॥**

वृष: स्थिर: स्थिरसंज्ञक:, स्त्री स्त्रीराशि: -क्षितिर्भूमिराशि: शीत: शीतलस्वभाव: रूक्ष: कांतिरहित: याम्येट् दक्षिणदिक्स्वामी सुभू: सुष्ठुभूमिचारी वायु: वायुप्रकृति: निशा रात्रिबली चतुष्पाच्चतुश्चरण: श्वेत: शुभ्रवर्ण: अतिशब्दो महाशब्द: विषमोदय: मध्यमप्रजासंग: मध्यमप्रज: मध्यमस्त्रीसंगश्च शुभ: सौम्य: वैश्यवर्ण: अयं श्लथांग: मेषसिंहधन्विनामेव दृढांगत्वमुक्तम् । अर्थादितरे श्लथांगा बोध्या ।। ३ ।।

वृष—स्त्री राशि, स्थिर संज्ञक, भूमि तत्त्व, शीतल स्वभाव, कांति रहित, दक्षिण दिशा का स्वामी, अच्छी जमीन पर विचरने वाला, वात प्रकृति, रात्रि बली, चार चरण वाला, श्वेत वर्ण, महाशब्दकारी, विषमोदयशील, मध्यम प्रजा और मध्यम ही स्त्री संग करने वाला, शुभकारक, वैश्य वर्ण और शिथिल शरीर वाला है ।

विशेष – मेष, सिंह और धनु ये ही तीन राशियाँ पुष्ट अंगों वाली हैं। बाकी सब शिथिल शरीर वाली ही हैं ॥ ३ ॥

अथ मिथुनराशिस्वरूपमाह--

**प्रत्यक्समीरः शुकभा द्विपान्ना द्वन्द्वो द्विमूर्तिर्विषमोदयोष्णः ।**
**मध्यप्रजासङ्गवनस्थशूद्रो दीर्घस्वनः स्निग्धदिनेट् तथोग्रः ॥४॥**

द्वंद्वं मिथुनराशिरेतादृशो ज्ञेयः यथा--प्रत्यक्पश्चिमदिक्स्वामी समीरो वायुराशिः शुकभाः शुककांतिः हरितवर्ण इत्यर्थः। द्विपात् द्विचरणः ना पुरुषराशिः द्विमूर्त्तिर्द्विस्वभावः चरस्थिरस्वभावात्मक इत्यर्थः। तत्रापि पूर्वार्द्धस्थिरमुत्तरार्धं चरमिति ज्ञेयम्। उक्तं च भट्टोत्पलेन—

चरराशौ विपरीतं मिश्रं वाच्यं द्विमूर्त्युदये।
स्थिरवत्प्रथमेऽर्द्धे स्यादपरं चरराशिवत्सर्वमिति ॥

विषमोदयः उष्णः उष्णस्वभावः मध्यमप्रजासंगः मध्यमस्त्रीसंगश्च वनस्थो वनचारी शूद्रः शूद्रवर्णः दीर्घस्वनः महाशब्दः स्निग्धः चिक्कणः दिनेट् दिवाबली तथा शब्दः पादपूरणे। उग्रः क्रूरः अयं श्लथांगः ॥ ४ ॥

मिथुन—पश्चिम दिशा का स्वामी, वायु राशि, तोते के समान हरित वर्ण, दो चरणों वाला, पुरुष राशि, द्विस्वभाव ( अर्थात् चर और स्थिर दो स्वभाव वाला ) विषमोदयी, उष्ण स्वभाव, मध्यम प्रजा और मध्यम स्त्री संग वाला, वनचारी, शूद्र वर्ण, महाशब्दकारी, चिकना, दिवा बली और क्रूर प्रकृति का है। इसका भी शरीर शिथिल है।

विशेष इसके शरीर का पूर्वार्ध भाग स्थिर और उत्तरार्ध चर स्वभाव का है ॥ ४ ॥

अथ कर्कराशिस्वरूपमाह--

**बहुप्रजासङ्गपदः कुलीरश्चरोऽङ्गना पाटलहीनशब्दः ।**
**शुभः कफी स्निग्धजलाम्बुचारी समोदयी विप्रनिशोत्तरेशः ॥५॥**

कुलीरः कर्कराशिः एतादृशो ज्ञेयः यथा–बहुप्रजासंगपदः बहुप्रजो बहुस्त्रीसंगो बहुचरणश्च चरश्चरसंज्ञकः अंगना स्त्रीराशिः पाटलः श्वेतरक्तमिश्रवर्णः हीनशब्दो निःशब्दः शुभः सौम्यः कफी कफप्रकृतिः स्निग्धः चिक्कणः जलं जलराशिः अंबुचारी जलचरः समोदयी विप्रो ब्राह्मणवर्णः निशा रात्रीबली उत्तरेशः उत्तरदिक्स्वामी अयं श्लथांगः ॥ ५ ॥

कर्क—बहुत सन्तान, बहुत स्त्री संग और बहुत चरणों वाला, चर स्वभाव, स्त्री जाति, कुछ-कुछ लाल वर्ण, शब्दशून्य, शुभकारक, कफ प्रकृति वाला, चिकना, जल राशि, जल चारी, समोदयी, ब्राह्मण वर्ण, रात्रि बली, उत्तर दिशा का स्वामी और शिथिल शरीर है ।। ५ ।।

अथ सिंहराशिस्वरूपमाह—

**पुमान्स्थिरोऽग्निर्दिनपीतरूक्षः पित्तोष्णपूर्वेशदृढश्चतुष्पात् ।**
**समोदयो दीर्घरवोऽल्पसङ्गप्रजो हरिः शैलनृपोग्रधूम्रः ।।६।।**

हरि: सिंह: स एतादृशो ज्ञेय: पुमान् पुरुष: स्थिर: स्थिरसंज्ञक: अग्निरग्निराशि: दिनं दिवाबली पीत: पीतवर्ण: रूक्ष: कांतिरहित: पित्त: पित्तप्रकृति: उष्ण: उष्णस्वभाव: पूर्वेश: पूर्वदिक्स्वामी दृढ: दृढांग: चतुष्पाच्चतुश्चरण: समोदय: दीर्घरवो महाशब्द: अल्पसंगप्रज: अल्पस्त्रीसंगोऽल्पप्रजश्च शैल: पर्वतचारी नृप: क्षत्रियवर्ण: उग्र: क्रूर: धूम्र: धूम्रवर्ण: अयं राशिर्द्विवर्ण: पीतो धूम्रश्च ।। ६ ।।

सिंह—पुरुष जाति, स्थिर संज्ञक, अग्नि राशि, दिवा बली, पीत वर्ण, कान्तिहीन, पित्त प्रकृति, उष्ण स्वभाव, पूर्व दिशा का स्वामी, पुष्ट शरीर, चार चरणों वाला, समोदयी, महाशब्दकारी, अल्प सन्तान और अल्प स्त्री संग युक्त, पर्वतचारी, क्षत्रिय वर्ण, क्रूर स्वभाव और धूम्र वर्ण वाला है ।

विशेष मेष राशि के समान इस राशि के भी पीत और धूम्र ये दो वर्ण हैं ।। ६ ।।

अथ कन्याराशिस्वरूपमाह

**पाण्डुर्द्विपात्स्त्री द्वितनुर्यमाशा निशा मरुच्छीतसमोदयाक्ष्मा ।**
**कन्यार्द्धशब्दा शुभभूमिवैश्या रूक्षाऽल्पसङ्गप्रसवाशुभा च ।।७।।**

कन्याराशिस्वरूपमेतादृशम्—पाण्डु: पिंगलवर्णा द्विपात् द्विचरणा स्त्री स्त्रीराशि: द्वितनुर्द्विस्वभावा चरस्थिरद्विस्वभाविका यमाशा दक्षिणदिक्स्वामिनी निशा रात्रिबला मरुद्वायुप्रकृति: शीता शीतस्वभावा समोदया क्ष्मा भूमिराशि: अर्द्धशब्दा खंडशब्दा शुभभूमि: शुभभूमिचारिणी वैश्या वैश्यवर्णा रूक्षा कान्तिरहिता अल्पसंगप्रसवा अल्पसंगा अल्पप्रसवा च शुभाशुभसौम्यराशि: चकार: समुच्चयार्थ: ।।७।।

कन्या -पिंगल वर्ण, दो चरण वाली, स्त्री राशि, चर और स्थिर दो स्वभाव वाली, दक्षिण दिशा की स्वामी, रात्रि बली वायु और शीत प्रकृति, समोदयी, भूमि

राशि, अखण्ड शब्द करने वाली, शुभ भूमि में विचरने वाली, वैश्य वर्ण, कान्तिहीन, अल्प सन्तान और अल्प संग करने वाली और शुभ राशि मानी जाती है ।। ७ ।।

अथ तुलाराशिस्वरूपमाह—

**पुमांश्चरश्चित्रसमोदयोष्णः प्रत्यङ्मरुत्स्निग्धरवोनवन्यः ।**
**स्वल्पप्रजासङ्गमशूद्र उग्रस्तुलो द्युवीर्यो द्विपदः समानः ॥८॥**

पुमान् पुरुषराशिः चरश्चरसंज्ञकः चित्रो नानाविधवर्णः समोदयः उष्णः प्रत्यक् पश्चिमदिक्स्वामी मरुद्वायुराशिः स्निग्धः चिक्कणः रवोनो निःशब्दः वन्यः वनचारी स्वल्पप्रजासंगमः स्वल्पप्रजः स्वल्पस्त्रीसंगश्च शूद्रः शूद्रवर्णः उग्रः क्रूरः द्युवीर्यो दिवाबली द्विपदः द्विचरणः समानः समांगः अयं श्लथांगः तुलाराशिरेतादृशो ज्ञेयः ।। ८ ।।

तुला— पुरुष राशि, चरसंज्ञक, बहुरंगा वर्ण, समोदयी, उष्ण प्रकृति, पश्चिम दिशा का स्वामी, वायु प्रकृति, चिकना, शब्द रहित, वनचारी, अल्प सन्तान और अल्प संग वाला, शूद्र वर्ण, क्रूर स्वभाव, दिवा बली, दो चरणों वाला, सम अंगों से युक्त और शिथिल शरीर का है ।। ८ ।।

अथ वृश्चिकराशिस्वरूपमाह

**स्थिरः सितः स्त्री जलमुत्तरेशो निशारवोनो बहुपात्कफी च ।**
**समोदयो वारिचरोऽतिसङ्गप्रजः शुभः स्निग्धतनुर्द्विजोऽलिः ॥९॥**

स्थिरः स्थिरसंज्ञकः सितः शुभ्रवर्णः स्त्री स्त्रीराशिः जलं जलराशिः उत्तरेशः उत्तरदिक्स्वामी निशा रात्रिबली रवोनो निःशब्दः बहुपात् बहुचरणः कफी कफप्रकृतिः समोदयः वारिचरः जलचरः अतिसंगप्रजः बहुस्त्रीसंगो बहुप्रजश्च शुभः सौम्यः स्निग्धतनुः चिक्कणतनुः द्विजः ब्राह्मण-वर्णः अलिर्वृश्चिकराशिरेतादृशो ज्ञेयः । अयं श्लथांगः ॥९॥

वृश्चिक—स्थिर संज्ञक, शुभ्र वर्ण, स्त्री राशि, जल तत्त्व, उत्तर दिशा का स्वामी, रात्रि बली, शब्द रहित, वहुत चरणों से युक्त, कफ प्रकृति, समोदयी, जल-चारी, बहुत सन्तान और बहुत स्त्री संग वाला, शुभ, चिकने शरीर और ब्राह्मण वर्ग का है ।। ९ ।।

अथ धनूराशिस्वरूपमाह—

**ना स्वर्णभाः शैलसमोदयोऽतिशब्दो दिनं प्राग्दृढरूक्षपीतः ।**



**राजोष्णवित्तो धनुरल्पसूतिसङ्गो द्विमूर्तिर्द्विपदोऽग्निरुग्रः ॥१०॥**

ना पुरुषराशि: स्वर्णभा: स्वर्णकांति: शैल: पर्वतचारी समोदय: अति-शब्द: महाशब्दश्च दिनं दिवाबली प्राक्पूर्वदिक्स्वामी दृढ: दढांग: रूक्ष: कांतिरहित: पीत: पीतवर्ण: राजा क्षत्रियवर्ण: उष्ण: पित्तप्रकृति: अल्प-सूतिसंग: अल्पप्रजोऽल्पस्त्रीसंगश्चोच्यते द्विमूर्तिश्चरस्थिरस्वभावात्मक: द्विपद: द्विचरण: तत्रापि पूर्वार्द्धे द्विपदत्वमुत्तरार्द्धे चतुष्पदत्वं ज्ञेयं स्वयमेवाग्रे वक्ष्यति। अग्निरग्निराशि: उग्र: क्रूर: अयं राशिर्द्विवर्ण: सुवर्णवर्ण: पीत-वर्णश्च। धनूराशिरेतादृशो ज्ञेय: ॥ १० ॥

धनु—पुरुष राशि, स्वर्ण वर्ण, पर्वतचारी, समोदयी, अति घोर शब्दकारी, दिवा बली, पूर्व दिशा का स्वामी, दृढ़ शरीर, कान्तिरहित, पीत वर्ण, क्षत्रिय वर्ण, उष्ण स्वभाव, पित्त प्रकृति, अल्प सन्तान और अल्प संग वाला, चरस्थिर द्विस्वभावात्मक, दो चरणों वाला, अग्नि तत्त्व और क्रूर स्वभाव है।

विशेष—इस राशि के भी सुवर्ण और पीत ये दो वर्ण हैं ॥ १० ॥

अथ मकरराशिस्वरूपमाह—

**मृगश्चरः क्ष्मार्धरवो यमाशास्त्रीपिङ्गरूक्षः शुभभूमिशीतः।**
**स्वल्पप्रजासङ्गसमीररात्रिरादौ चतुष्पाद्विषमोदयो विट् ॥११॥**

मृगो मकरराशिरेतादृशो ज्ञेय: चर: चरसंज्ञक: क्ष्मा भूमिराशि: अर्द्ध-रवोऽर्द्धशब्द: यमाशा दक्षिणदिक्स्वामी स्त्री स्त्रीराशि: पिङ्ग: पिंगलवर्ण: रूक्ष: कांतिरहित: शुभ: सौम्य: भूमि: भूमिचारी शीत: शीतलस्वभाव: स्वल्पप्रजास्वल्पप्रज: स्वल्पस्त्रीसंगश्च समीरो वातप्रकृति: रात्रि: रात्रिबलो आदौ चतुष्पात् राशिपूर्वार्द्धे चतुष्पदत्वं ज्ञेयम् उत्तरार्द्धे जलचरत्वं ज्ञेयम् उत्तरार्द्धे जलचरत्वमित्यग्रे वक्ष्यति। विषमोदय: विट् वैश्यवर्ण: अयं श्लथांग: ॥ ११ ॥

मकर—चरसंज्ञक, भूमि राशि, अर्ध शब्दकारी, दक्षिण दिशा का स्वामी, स्त्री राशि, पिंगल वर्ण, कान्तिरहित, सौम्य, भूमिचारी, शीतल स्वभाव, स्वल्प सन्तान और स्वल्प संग वाला, वात प्रकृति, रात्रि बली, चार चरण वाला, विषमोदयी, वैश्य वर्ण और शिथिल शरीर है।

विशेष—इस राशि का पूर्वार्द्ध भाग चतुष्पद तथा उत्तरार्द्ध भाग जलचर है। यह आगे चलकर बताया जायेगा ॥ ११ ॥

अथ कुम्भराशिस्वरूपमाह--

**कुम्भोऽपदो ना दिनमध्यसङ्गप्रसूः स्थिरः कर्बुरवन्यवायुः ।**
**स्निग्धोष्णखण्डस्वरतुल्यधातुः शूद्रः प्रतीची विषमोदयोग्रः ॥१२॥**

कुम्भराशिरेतादृशो ज्ञेयः अपदः चरणहीनः ना पुरुषराशिः दिनं दिवाबली मध्यसंगप्रसूः मध्यमस्त्रीसङ्गो मध्यमप्रसवश्च स्थिरः स्थिरराशिः कर्बुरश्चित्रवर्णः वन्यो वनचारी वायुर्वायुराशिः स्निग्धः चिक्कणः उष्णः खण्डस्वरोऽर्द्धशब्दः तुल्यधातुः समवातपित्तकफप्रकृतिः शूद्रः शूद्रवर्णः प्रतीची पश्चिमदिक्स्वामी विषमोदयः उग्रः क्रूरः । अयं श्लथांगः ॥ १२ ॥

कुम्भ- चरणहीन, पुरुषराशि, दिवाबली, मध्यम स्त्री संग और मध्यम सन्तति वाला, स्थिर राशि, बहुरंगा वर्ण, वनचारी, वायुराशि, चिकना, उष्ण स्वभाव, अर्धस्वर, सम वात-पित्त कफ प्रकृति, शूद्रवर्ण, पश्चिम दिशा का स्वामी, विषमोदयी, क्रूर और शिथिल शरीर है ॥ १२ ॥

अथ मीनराशिस्वरूपमाह--

**मीनोऽपदः स्त्री कफवारिरात्रिनिःशब्दबभ्रुर्द्वितनुर्जलस्थः ।**
**स्निग्धोऽतिसङ्गप्रसवोऽपि विप्रः शुभोत्तराशेड् विषमोदयश्च ॥१३॥**

मीनराशिरेतादृशो ज्ञेयः अपदश्चरणहीनः स्त्री स्त्रीराशिः कफः कफप्रकृतिः वारि जलराशिः रात्रि रात्रिबली निशब्दः शब्दरहितः बभ्रुः पिंगलवर्णः द्वितनुश्चरस्थिरस्वभावात्मकः जलस्थः जलराशिः स्निग्धः चिक्कणः अतिसंगप्रसवः अत्यंतस्त्रीसंगोऽत्यन्तप्रसवश्च अपिशब्दः संमुच्चये विप्रो ब्राह्मणवर्णः शुभः सौम्यः उत्तराशेट् उत्तरदिक्स्वामी विषमोदयः । अयं श्लथांगः ॥ १३ ॥

मीन चरण हीन, स्त्री राशि, कफप्रकृति, जलतत्त्व, रात्रिबली, शब्दरहित, न्योले के समान वर्ण, द्विस्वभाव, जलचारी, चिकना, अधिक सन्तान तथा स्त्री संग युक्त, विप्रवर्ण, सौम्यराशि, उत्तर दिशा का स्वामी, विषमोदयी तथा शिथिल अंग ये मीनराशि के लक्षण हैं ॥ १३ ॥

एवं राशिस्वरूपमुक्त्वेदानीं राशीनां मित्राऽमित्रविभागमाह--

**धराम्बुनोरग्निसमीरयोश्च वर्गे सुहृत्वं परतोऽरिभावः ।**

**चापान्त्यभागस्य चतुष्पदत्वं ज्ञेयं मृगान्त्यस्य जलेचरत्वम् ॥१४॥**

धराम्बुनोः पृथ्वीराशिजलराश्योर्वर्गे सुहृत्वं मित्रत्वमेवमग्निसमीरयोः अग्निराशिवायुराश्योर्वर्गेऽपि मित्रत्वं ज्ञेयम्। परतः एतद्वैपरीत्ये अरिभावः शत्रुभावः। एतदुक्तं भवति--पितापुत्रयोः स्त्रीपुरुषयोर्वा स्वामिसेवकयोर्वान्योर्वा यस्य कस्यापि मैत्रीविचारे पृथ्वीराशिजलराशिसंबंधे मित्रत्वं वक्तव्यम्, एवमग्निराशिवायुराशिसंबंधे मित्रत्वं वाच्यम् अन्यथा शत्रुत्वम्। यथा भूम्यग्न्योर्भूम्यनलयोरब्वग्न्योरंबुवाय्वोर्वर्गे शत्रुत्वम्। यद्वा द्वयोरेक एव पृथिव्यादिवर्गः स्यात् तथा द्वयोः परस्परमतिप्रीतिरित्यर्थतः सिद्धम्। अथ राशिस्वरूपकथनावसरे धनुर्मकरयोरनुक्ते किंचित्स्वरूपाविशेषे सिंहावलोकनन्यायेनाह चापेति--चापस्य धनुषः अंत्यभागे उत्तरार्द्धे चतुष्पदत्वं ज्ञेयम्। मृगस्य मकरस्यांत्यभागे उत्तरार्द्धे जलचरत्वं ज्ञेयम्॥ १४॥

उपरोक्त बारहों राशियों का स्वरूप बतलाकर अब उन राशियों के परस्पर शत्रु-मित्र विभाग करते हुए कहते हैं—पृथ्वी तत्त्व और जल तत्त्व वाली राशियों में परस्पर मित्रता रहती है। इसी तरह अग्नि तत्त्व और वायु तत्त्व वाली राशियों में भी परस्पर मैत्री रहती है। इसके विपरीत जैसे—पृथ्वी तथा अग्नि तत्त्व वाली राशियों में, जल तथा अग्नितत्त्व वाली राशियों में एवं जल तथा वायु तत्त्व वाली राशियों में परस्पर शत्रुता रहती है। यह राशिसम्बन्धी शत्रुता तथा मित्रता का विचार पिता-पुत्र, स्वामी-सेवक और स्त्री-पुरुष अथवा जिस-किसी भी दो राशि के लोगों में किया जाता है। यदि दो व्यक्तियों की एक ही तत्त्व की राशियाँ हों तो दोनों में अतिशय प्रीति मानी जायेगी। धनु राशि का उत्तरार्ध भाग चतुष्पद और मकरराशि का उत्तरार्ध भाग जलचर माना जाता है॥ १४॥

अथोक्तराशिस्वरूपस्य फलकथनार्थं संक्षेपेण किञ्चित्स्वरूपमाह--

**पित्तानिलौ धातुसमः कफश्च त्रिर्मेषतः सूरिभिरूहनीयाः।**
**राजन्यविट्शूद्रधरासुराश्च सर्वं फलं राश्यनुसारतः स्यात्॥१५॥**

पित्तानिलाविति। मेषः पित्तं वृषोऽनिलो वायुः मिथुनः धातुसमः वातपित्तकफात्मकः कर्कः कफी तथा सिंहः पित्तं कन्याऽनिलः तुला धातुसमो वृश्चिकः कफी एवं धनुः पित्तं मकरोऽनिलः कुम्भो धातुसमः मीनः कफीति मेषतः मेषमारभ्य मीनपर्यन्तं चतुष्कं चतुष्कं कृत्वा। त्रिस्त्रिरावृतं

भवति। एते राशयः सूरिभिः पण्डितैरूहनीयाः ज्ञातव्याः। अथ राजन्य-विट्शूद्रधरासुराणां द्वादशराशिषु त्रिरावृत्तिर्ज्ञातव्या तद्यथा–मेषो राजन्यः क्षत्रियवर्णः वृषः विड्वैश्यवर्णः मिथुनः शूद्रवर्णः कर्को धरासुरो ब्राह्मणवर्णः तथा सिंहः क्षत्रियवर्णः कन्या वैश्यवर्णा तुला शूद्रवर्णा वृश्चिको ब्राह्मण-वर्णः एवं धनुः क्षत्रियवर्णः मकरो वैश्यवर्णः कुम्भः शूद्रवर्णः मीनो ब्राह्मणवर्णः एतेषां सर्वं फलं राश्यनुसारतो राशिस्वरूपसदृशं फलं स्यादित्यर्थः।

अथ गणितं वक्ष्यति तत्रादौ ग्रहाणां चालनं वक्ष्यति—तत्र चालने वर्ष-प्रवृत्तिरपेक्षिता, सा च ग्रन्थकर्ताऽत्र नोक्ता कुतः वर्षतंत्र उक्तत्वात् सा तु अस्माभिरत्रोपयुक्तत्वात्प्रदर्श्यते अन्यच्च वर्षेशनिर्णयदशांतर्दशामासप्रवेश-दिनप्रवेशादिकमत्रोपयुक्तम्, तत्तु वर्षतंत्रे प्रदर्शितमिति नात्र प्रदर्शितम्। अत्र तु अस्माभिः यस्य यत्र उपयोगः तत्र तत् प्रदर्श्यते॥ १५॥

अब उपर्युक्त राशियों के स्वरूप का फल कहने के लिए संक्षेप में इन राशियों का स्वरूप बता रहे हैं। जैसे—मेष पित्त प्रकृति, बृष वात प्रकृति, मिथुन सम-वात पित्त प्रकृति, कर्क कफ प्रकृति, सिंह पित्त प्रकृति, कन्या वात-प्रकृति, तुला सम-वात-पित्त प्रकृति, बृश्चिक कफ प्रकृति, धनु पित्त प्रकृति, मकर वात प्रकृति, कुम्भ सम-वात-पित्त प्रकृति और मीन कफ प्रकृति है। इसी तरह मेष की क्षत्रिय, वृष की वैश्य, मिथुन की शूद्र और कर्क की ब्राह्मण जाती है। इसी प्रकार चार, चार राशियों की आवृत्ति करके अन्य राशियों की भी जाति समझ लीजिए। पहले जो बारह राशियों का स्वरूप, गुण, जाति, दिशा, काल तथा स्थान आदि बताया गया है, उसी के अनुसार वे फल भी देती हैं॥ १५॥

अथ वर्षफलसाधनार्थं वर्षप्रवृत्तिसमयमाह —

**गताः समाः पादयुताः प्रकृतिघ्नसमागणात्।**
**खवेदा ४० सघटीयुक्ता जन्मवारादिसंयुताः॥**
**अब्दप्रवेशे वारादि सप्ततष्टेऽत्र निर्दिशेत्॥१६॥**

गताः समाः गतवर्षाणि तद्यथा जन्मकालिकः शको वर्तमानशकात् शोध्यः शेषं गतसमाः ताः पादयुक्ताः स्वचतुर्थांशेन युताः कार्याः प्रकृतिरेक-विंशतिस्तद्घ्नः तेन गुणितो यः समागणो वर्षगणः तस्मात् खवेदा ४०

प्तघटीयुक्ताश्चत्वारिंशता भक्तात् घट्यादि यल्लब्धं तेन चतुर्थांशयुक्त-समा युताः कार्याः ततः जन्मवारादिभिः जन्मकालिकवारेष्टघटीपलैः संयुक्ताः कार्याः तदनन्तरमूर्ध्वाङ्के सप्ततष्टे सप्तभिर्भक्ते यच्छेषं तत् अत्र अस्मिन् ग्रन्थे अब्दप्रवेशे वर्षप्रवेशे वारादि वारघटिपलात्मकं निर्दिशेत् वदेत्। अत्र वर्तमानो वारो ज्ञेयः ॥ १६ ॥

अब वर्ष फल बनाने के लिए वर्ष प्रवृत्ति का समय बताते हुए कहते हैं—बीते हुए वर्ष की जो संख्या हो—उसमें गत वर्ष की संख्या की एक चौथाई और जोड़ दे। इसके बाद उसमें २१ से गुणा करे फिर ४० का भाग देकर जो संख्या लब्ध हो और जन्म के वार आदि की जो संख्या हो उसे भी उसी में जोड़ दे। अब उस पूर्ण संख्या में ७ का भाग दे। जो शेष बचे उसी को वर्ष प्रवेश का ध्रुवा समझे।

उदाहरण—जैसे किसी का गत वर्ष १२ है। इसको दो स्थानों में रखा। एक स्थान के १२ की चौथाई ३ को लेकर २ में जोड़ दिया तो १५ हुए। यही बार अंक हुआ। अब दूसरे बारह को २१ से गुणा किया तो २ २ हुए। उसमें ४० का भाग दिया तो लब्ध हुआ ६। यही घटी हुई। शेष १२ को ६० से गुणा किया तो ७२० हुए। इसमें ४० का भाग दिया तो शेष लब्ध हुआ १८। यही पल हुए। शेष रहा शून्य। वही विपल हुआ। इस प्रकार गत वर्ष का ध्रुवा बारादि ५।६।१८।० ये अंक हुए, इसमें अपना जन्म, वार और घटी आदि जोड़ देने से वर्ष प्रवेश के वार बन जाते हैं।

विशेष—व्यवस्थापितो जन्मगताब्दवृन्दकैः क्रमात्सपादार्धकसार्धकीकृत।
सम्न्वितो जन्मदिनादिकेन वर्षप्रवेशस्य घटीमितिः स्यात् ॥

गतवर्ष की जितनी संख्या हो, उसे तीन जगह रखे। एक जगह सवाया, दूसरी जगह आधा, तीसरी जगह ड्योढ़ा। सवाये से दिन आदि, आधे से घटी आदि और ड्योढ़े से पलादिक निकलते हैं। जब ये सब संख्यायें जोड़ दी जाती हैं, तब गत वर्ष की ध्रुवा बनती है और जब इसी संख्या में जन्म और वार आदि की संख्या जोड़ कर सात का भाग दे दिया जाता है तब वर्ष-प्रवेश के वार आदि निकल आते हैं ॥ १६ ॥

अथ तिथिसाधनमाह—

**शिवघ्नोऽब्दः स्वखाद्रीन्दुलवाढ्यः खाग्निशेषितः।**
**जन्मतिथ्यान्वितस्तत्र तिथ्यब्दप्रवेशनम् ॥ १७ ॥**

अब्दः गतवर्षगणः शिवघ्नः एकादशभिर्गुण्यः स्वखाद्रींदुलवाढ्यः स्वकीयो यः सप्तत्यधिकशतभागस्तेनाढ्यः युक्तः कार्यः जन्मतिथ्यन्वितः शुक्लप्रतिपदमारभ्य जन्मकालीनवर्तमानतिथिभिरन्वितः युक्तः कार्यः खाग्निशेषितः त्रिंशता भक्तः तत्र तिथौ तस्मिन् शेषेऽपि तिथौ अब्दप्रवेशः वर्षप्रवेशो भवति अस्यां तिथौ वर्षप्रवेशो भवतीति नियमो नास्ति कदाचित्पूर्वतिथौ अग्रिमतिथौ च भवति, अत्र वारस्यैव प्रामाण्यं तिथित्रयस्य मध्ये यस्मिस्तिथौ पूर्वानीतवारो भवति स एव वर्षप्रवेशे तिथिर्ज्ञातव्यः यत्रकुत्रापि शेषितस्तष्टः एवमब्द आयाति तत्र लब्धस्य त्यागः शेषस्य ग्रहणमितिज्ञैर्ज्ञेयम् । अथोदाहरणक्रमो लिख्यते । तत्रादौ कस्यचिज्जन्मसमयो लिख्यते--संवत् १६४८ शके १५१३ माघशुक्लप्रतिपदि बुधे घटी ३६ श्रवणनक्षत्रं घटी ५४ वज्रयोगः घटी ६ अस्मिञ्छुभदिने श्रीसूर्योदयादिष्टघटी ३७ फलेषु ५३ तथा रात्रिगतघटी १२ पलानि ३१ जन्मस्थाने अक्षभा ७।३० देशांतरयोजनानि धनानि ३० सूर्यः ५।७।३०।६ जन्मलग्नम् ५।१०।५३।५० ॥

अथ वर्षप्रवेशोदाहरणम् । तत्र जन्मकालीनः शकः १५१३ वर्तमानशकात् १५५० शोधितः शेषांकप्रमितो जातो गतवर्षगणः ३७ अयं स्वचतुर्थांशेन युक्तः ९।१५।० गतवर्षगणः ४६।१५।० गतवर्षगणः ३७ एकविंशतया गुणितः जातोऽयमङ्कः ७७७ अयं चत्वारिंशता भक्तः लब्धं घटीपलात्मकम् १९।२५।३० एतच्चतुर्थांशयुक्तसमागणे ४६।१५।० घटीषु युतं जातं ४६।३४।२।५।३० एतज्जन्मवारादिना ४।३७।५२ युतं जातोऽयमङ्कः ५१ १२।१८।३० ऊर्ध्वांके सप्ततष्टे शेषं वर्षवारादि २।१२।१८।३० अथ प्रकारांतरेण वर्षप्रवेशानयनमाह ॥ वर्षध्रुवांकः ३६५।१५।३।३० अयं गतवर्षेण ३७ गुणितः १३५।१४।३४।२५।३० एतज्जन्मवारादि ४।३७।५३ युतो जातोऽयमंकः १३५।१९।२।१८।३० ऊर्ध्वांके सप्ततष्टे शेषं वर्षप्रवेशे वारादि २।१२।१८।३० अथ तिथ्यानयनम्–गतवर्षगणः ३७ एकादशभिर्गुणितः ४०७ अयं स्वकीयसप्तत्यधिकशत १७० भागेन २ युक्तः ४०९ अयं जन्मकालीनशुक्लप्रतिपदमारभ्य वर्तमान २ तिथिभिर्युक्तः ४११ त्रिंशता तष्टः शेषप्रमिता २१ जाता वर्षप्रवेशे कृष्णपक्षे षष्ठी अस्यां तिथौ पूर्वानीतवारो नास्ति अग्रिमतिथौ वर्तते इति कारणात् । अस्यां तिथौ २१ एकः १ युक्तः २२ जाता कृष्णपक्षे सप्तमी अत्र यस्मिन्मासे जन्म भवति तस्मिन्मासे वर्ष-

प्रवेशो भवति कदाचिज्जन्ममासात्पूर्वे मासेऽथवाऽग्रिममासे च भवति तत्र प्रमाणं वक्ष्यते जन्मकालीनरविणा सह तुल्यो रविर्यस्मिन्मासे भवति स एव वर्षप्रवेशो मासो ज्ञेयः। संवत् १७८५ शके १६५० माघकृष्णसप्तमी सोमे घटी ३७ पलानि ३६ हस्तनक्षत्रघटी १७ पलानि २८ सुकर्मायोगघटी २६ पलानि २८ अस्मिञ्छुभदिने सूर्योदयाद्गतघटीषु १२ पलानि १८ त्रिपला ३० वर्ष ३८ प्रवेशः अथैतद्वर्षप्रवेशसमये प्रमाणमाह वर्षप्रवेशकालीनोऽर्कः। तत्कालेऽर्को जन्मकालरविणा स्याद्यतः समः स एव मासो विज्ञेयो वर्षप्रवेशे बुधैर्ध्रुवम् ॥ यतः यस्मात्कारणात् तत्काले वर्षप्रवेशसमये कारणोक्तरीत्या शाधितः सूर्यो जन्मकालीनरविणा समस्तुल्यो राश्यंशकलाविकलात्मको भवति इदमेव वर्षप्रवेशसमये प्रमाणम्। अस्योदाहरणमग्रे प्रदर्श्यते। गणेश-दैवज्ञैः स्वकृतताजिकभूषणे जन्मकालीनसूर्येण सह वर्षप्रवेशकालीनोऽर्कः। कलासु तुल्यो नायाति इति ज्ञात्वा वर्षप्रवेशसमयभ्रान्त्या अन्यसंस्का-रोऽप्युक्तः यद्वाक्यं च। शाके जन्मशकोनिते भवति यच्छेषं गताब्द-व्रजोऽधोऽधः संगुणितः शरैश्च ५ युगुलेनांगै २६ र्युगै ४ र्भाजितः। लब्धं तज्जननोत्थ १० वारघटिकाब्देनान्वितं सप्तभिः पूर्वांके विहितेऽत्र शेषक-स्मितौ वर्षप्रवेशे ध्रुवः ॥ १ ॥ "वर्षप्रवेशोत्थघटीपलाढ्ये काले किल स्पष्ट-तरः सनूनम्। भानुर्जनुर्भानुसमान एष सिद्धांतरीत्या परिसाधनीयः ॥ २ ॥ जन्मकालनलिनीविलासिना नैव जातु तुलतां कलासु चेत्। वर्षकाल-नलिनीपतिस्तयोरंतरङ्गविहतं युतोनितम् ॥ ३ ॥" कार्यवर्षध्रुवे तस्मादसौ स्पष्टं प्रजायते। तत्कालसंभवैर्भावैः खेटैश्च फलनिर्णयः ॥ ४ ॥ अथ गणेश-दैवज्ञभ्रांतिदूरीकरणार्थमुदाहरणं प्रदर्श्यते--जन्मसमये सिद्धांतरहस्याहर्गणः २१।२८ चक्रं ६ सूर्योदये मध्यमोऽर्कः ९।६।७।४३ देशांतरविकलाभिः २२ युतः ९।६।८।५ इष्टघटीभिः ३७।५३ चालितः जातस्तात्कालिकोऽर्कः ९।६।४५।२५ मंदकेंद्रं ५।११।१४।३५ मंदफलं धनम्० । ४२।१३ संस्कृतोऽर्कः ९।७।२७।४८ अयनांशाः १७।४९ चरखण्डानि ७५।६०।२५ चरं धनम् १३८ संस्कृतो जातो जन्मसमये स्पष्टोऽर्कः ९।७।३०।६ अथ वर्षप्रवेशसमये सिद्धांतरहस्याहर्गणः ३५।६५ चक्रं ६ सूर्योदये मध्यमोऽर्कः ९।६।३२।५८

देशांतरविकलाभिर्युक्तः ९।६।१३।२० इष्टघटीभिः १५।१८।२०।३० चालितः जातस्तात्कालिकोऽर्कः ९।६।४५।२७ मन्दकेन्द्रं ५।११।१४।३३ मंदफलं धनं ०।४२।२३ संस्कृतोऽर्कः ९।७।२७।२० अयनांशाः १८।२६ चरखण्डानि ७५।६०।२५ चरं धनम् १३६ संस्कृतो जातो वर्षप्रवेशसमये स्पष्टोऽर्कः ९।७।३०।६ अयं वर्षकालीनः सूर्यः पूर्वनीतजन्मकालीनसूर्येण सह तुल्यो जात इति एतेन गणेशदैवज्ञमतं निरस्तम् अनया रीत्या द्वयोस्तुल्यता भवतीति गणेशदैवज्ञैर्न विलोकितमिति ज्ञायते तैस्तु अर्षप्रवेशस्पष्टघटीभिः पंचांगस्थितसूर्यस्य चालनं दत्वा जन्मकालीनसूर्येण सह कलासु तुल्यता नायातीति दृष्ट्वा वर्षप्रवेशघटीषु अन्यः संस्कारोऽप्युक्त इति चेदुच्यते तत्रापि हेतुरुच्यते। इदमेवांतरं पततीति सत्यम्। अत्रापि हेतुस्तैर्न बुद्धः अस्माभिः प्रदर्श्यते सौरब्रह्मार्या इत्यादिपक्षाणां परस्परमन्तरे सति जन्मकालीनसूर्यपंचांगस्थितसूर्ययोरंतरं पतति एकपक्षमंगीकृत्य उभयोः साधनं चेत् क्रियते तदा अंतरं न पतति ननु सौरपक्षाऽजन्मकालीनसूर्यः साधितः सौरपक्षात्पंचांगस्थसूर्येऽपि वर्तते तत्राप्यंतरं पततीति चेदुच्यते हेतुः येन यस्य कस्यापि जन्मसमये ग्रहसाधनं क्रियते तेन यस्य यस्मिन् ग्रामे जन्म तद्ग्रामस्य चरदेशांतरसंस्कारः क्रियते येन यत्ग्रामस्य पंचांगं क्रियते तेन तद्ग्रामस्य चरदेशांतरसंस्कारः क्रियते ग्रामे ग्रामे चरदेशांतरे भिन्नं भिन्नमिति कारणादंतरं पतति उभयोरेकदेशस्थसंस्कारश्चेत्क्रियते तदनन्तरं सर्वथा न पतति यस्मात् ग्रन्थात् साधितसूर्यो जन्मकालीनो यावद्भिः संस्कारैः संस्कृतो भवति तावद्भिः संस्कारैः संस्कृतः तस्माद् ग्रन्थाद्वर्षप्रवेशसमये साधितः सूर्यः विकलात्मकस्तुल्यो भवतीति निश्चितम्। अत्रार्थे पूर्वमेवोदाहरणं प्रदर्शितम्। अनया रीत्या द्वयोस्तुल्यता भवतीति ज्ञात्वा दैवज्ञचक्रचूडामणिभिः श्रीकेशवदैवज्ञैराचार्यैर्नान्यः संस्कारो वर्षप्रवेशसमयेऽप्युक्तः गणेशदैवज्ञैर्यदुक्तं तदसत् ॥ १७ ॥

अब तिथि साधन की विधि बताते हुए कहते हैं—गत वर्ष की संख्या को ११ से गुणा करके दो स्थान पर रखे। एक स्थान में १७० से भाग दे दे। जो अङ्क लब्ध हों उनको दूसरे स्थान में जोड़ दे। फिर जन्मकालिक तिथि को शुक्लपक्ष की प्रतिपदा से गिनने पर जो संख्या हो उसे भी उसी में जोड़कर ३० का भाग दे। जो शेष बचे, उसी संख्या को तिथि में वर्ष प्रवेश होगा, ऐसा समझे।

विशेष--उपर्युक्त विधि से तिथि आनयन करने में कभी-कभी एक तिथि का अन्तर भी पड़ जाता है। कभी एक तिथि कम हो जाती है और कभी एक तिथि ज्यादा। ऐसी दशा में वर्ष प्रवेश का वार प्रधान माना जायेगा। उस वार को जो तिथि पड़ती हो, उसी को मुख्य समझे। क्योंकि गणना करने पर तिथि में अन्तर पड़ सकता है, वार में नहीं।

उदाहरण--

श्री शुभ संवत् १९६३ शाके १८२७ तत्र सौम्यायने भास्करे ग्रीष्मर्तुः मासोत्तमे आषाढमासे शुक्लपक्षे तृतीयायां तिथौ चन्द्रवासरे घटी २।३७ पुष्यनक्षत्रे ७।१ हर्षणयोगे ४९।५८ गरकरणे ४।३७ एवं परिशोधितपञ्चाङ्गशुद्धे तत्र दिनमानम् घट्यादिः ३४।१२ दिनार्धघटचादिः १७।६ तदा लग्न ८।३।४६।१५ सूर्य २।१६।२०।२० चन्द्रमा ३।२२।२६।४० धनोदये श्रीनारायणदास गुप्तगेहे पुत्रजन्म इष्टम् ३२।४०।

यहाँ तिथि आनयन का उदाहरण इस प्रकार समझिए--मान लीजिए कि गत वर्ष २८ है। इसको ११ से गुणा किया तो ३०८ हुए। उसे दो जगह रखा। पहले में १०७ का भाग दिया तो एक लब्ध हुआ। इसको दूसरी जगह जोड़ा तो ३०९ संख्या हुई। इसी में तृतीया की ३ संख्या को जोड़ दिया तो ३१२ हुए। इसमें ३० का भाग दिया तो शेष बचा १२। बस, इसी द्वादशी तिथि में वर्ष प्रवेश होगा ऐसा समझे। यदि इस तिथि में वार सही न मिलता हो तो इसमें एक संख्या और मिलाकर या घटा कर काम चलाया जा सकता है॥ १७॥

अथ वर्षप्रवेशे पञ्चांगस्थितग्रहेषु चालनमाह--

**गतैष्यदिवसाद्येन गतिर्निघ्नी खषड् ६० हृता।**
**लब्धमंशादिकं शोध्यं योज्यं स्पष्टो भवेद् ग्रहः॥१८॥**

अथ वर्षप्रवेशसमये स्पष्टा ग्रहाः साध्यास्तत्रापि सुखार्थं पञ्चांगस्थितग्रहेषु चालनमाह। गतैष्यदिवसैः कृत्वा ग्रहस्य कलादिका गतिर्गुण्या खषड्भिः षष्टया भाज्या लब्धमंशादिकम् अंशकलाविकलात्मकम् पञ्चांगस्थितग्रहे शोध्यं योज्यं वा यदागतमंतरं तदा शोध्यं वक्रगतिग्रहस्य राहुकेत्वोश्च चालनं मार्गिग्रहापेक्षया विपरीतं ज्ञेयम्। उदाहरणम्--वर्षप्रवेशवारादिक[illegible] ३।१२।१८ [illegible] ६।१३।५६ शोधिते जाताश्चालनांकाः २।५८।२२ अनेन सर्वे ग्रहाश्चालिताः॥१८॥

गत दिनों तथा ऐष्य दिनों से ऋण और धनचालन के क्रम से ग्रहों की गति अर्थात् कला-विकला को गुणा करके गोमूत्रिका के विधान से ६० का भाग दे। इस प्रकार भाग देने पर जो अंश, कला या विकला लब्ध हो, उसे पक्ति (पञ्चाङ्ग) में स्थित ग्रहों मे ऋण चालन के क्रम से घटा ले या धन चालन के क्रम से जोड़े तो तात्कालिक ग्रह स्पष्ट हो जाते हैं। इस प्रसंग में यह भी जान लेना आवश्यक है कि वक्री गति वाले ग्रह, राहु और केतु इनका चालन मार्गी ग्रहों की अपेक्षा विपरीत क्रम से होता है। यानी ऋणचालन में धनचालन और धनचालन में ऋण चालन करना होता है।

उदाहरण--

जैसे वर्षप्रवेश के समय वार, घटी, पल २।४७।२२ है। और पञ्चाङ्ग में स्थित वार, घटी, पल ४।४८।०३ पीछे हैं। इस कारण यहाँ इष्ट काल के वारादि में घटाया तो २।४०।१९ शेष रहे। इसे धनचालन समझें। इन धनचालन को सूर्य की गति ५६ और विगति ५५। को गोमूत्रिका की रीति से गुणा किया। फिर ६० से भाग देने पर ३।८।२६। यह लब्ध अंशादि हुए। इनमें पंक्तिस्थ सूर्य २।७।३४।९ को जोड़ दिया तो वर्ष प्रवेश समय में २।१०।४२।३५ यह राश्यादि स्पष्ट सूर्य हुआ।

विशेष--चालन बनाने की विधि यह है कि पञ्चाङ्ग ( पत्रा ) में आठ-आठ चार-चार या दो-दो दिन के सूर्यादि ग्रहस्पष्ट बने रहते हैं-- उसी को प्रस्तार, पंक्ति तथा पञ्चांग कहते हैं। वह पंक्ति इष्ट काल ( जन्म दिन अथवा वर्ष प्रवेश के दिन ) के आगे हो और इष्टकाल पीछे हो तो पंक्ति के वार, घटी और पल में इष्टकाल का वार, घटी और पल घटा दे। ऐसा करने पर जो अंक शेष बचे वही वार, घटी, पल ऋणचालन होता है। यदि इष्टकाल आगे हो और पंक्ति पीछे हो तो इष्टकाल के वार-घटी-पल में पंक्ति के वार-घटी-पल को घटा दे। ऐसा करने से जो अंक शेष बचे, वही वार-घटी-पल धनचालन माना जाता है।

सूर्य-चन्द्र सदा मार्गी रहते हैं।

भौम-बुध, बृहस्पति-शुक्र और शनि ये पाँचों ग्रह मार्गी और वक्री दोनों हुआ करते हैं।



राहु-केतु सदा वक्री रहते हैं। ये कभी मार्गी होते ही नहीं ॥ १८ ॥

अथ पञ्चाङ्गस्थनक्षत्राच्चन्द्रानयनमाह—

**खषड्घ्नं भयातं भभोगोद्धृतं तत्खतर्कघ्नधिष्ण्येषु युक्तं द्विनिघ्नम्।**
**नवाप्तं शशी भागपूर्वस्तु भुक्तिः खखाभ्राष्टवेदा भभोगेन भक्ताः ॥१६॥**

वर्षप्रवेशसमये यन्नक्षत्रं भवति तस्य नक्षत्रस्य इष्टकालावधि भुक्त-घटिकाः कार्याः ताः षष्ट्या गुण्याः भभोगोद्धृतं नक्षत्रस्य गतैष्ययोगेन भाज्यात् यल्लब्धं तत् षष्टिगुणिताश्विन्यादिगतनक्षत्रेषु युक्तं द्विनिघ्नं ता अश्विन्यादिनक्षत्रादिष्टघटीपर्यन्तं घटिका भवन्ति ता नवभिर्भाज्या लब्धनवांशाः शेषं षष्ठ्या गुण्यं नवभिर्भाज्यं लब्धं कलाः पुनः शेषषष्ट्या गुण्यं नवभिर्भाज्यं लब्धं विकलाः एवं शशी भागपूर्वोऽशादिकस्तात्कालिकः स्यात्। अथ गतिसाधनम्। खखाभ्राष्टवेदा ४८००० भभोगेन नक्षत्रगतै-ष्ययोगेन भक्ताः चन्द्रस्य कलादिका स्पष्टा गतिः स्यात्।

उदाहरणम् - वर्षप्रवेशसमये हस्तनक्षत्रं तस्य पूर्वदिने भुक्तघटिकाः ४१। २४। एता इष्टघटीभिः १२।१८ युक्ताः इष्टघटीपर्यन्तं हस्तनक्षत्रस्य भुक्तघटिकाः जाताः ५३। ४२ एताः षष्ट्या गुणिताः ३२। २२ नक्षत्रस्य गतैष्ययोगेन ५८।५२ भक्ताः स्वर्वाणितो भाज्यः १९३३२० भाजकौ ३५।३२ भाजनाल्लब्धम् ५४।४४।१ अश्विन्यादिगतनक्षत्रपर्यन्तसंख्याः १२ षष्ट्या गुणिताः ७२० पूर्वलब्ध्या ५४।४४।१ युक्ताः ७७४।४४१ द्विगुणिताः १५।४८।८८।२ नवभिर्भक्ताः लब्धमंशादिकम् १७२।९।४७ अंशास्त्रिंशता ३० भक्ताः जातस्तात्कालिको राश्यादिचन्द्रः ५।२२।९।४७॥

अथ गत्यानयनम्। खखाभ्राष्टवेदा नक्षत्रस्य गतैष्ययोगेन ५८।५२ भक्ता लब्धा कलादिका चन्द्रस्य स्पष्टा गतिः ८१५।२४ उक्तरीत्या साधि-तास्तात्कालिकस्पष्टाः ग्रहाः॥ १६॥

| रव्यादिस्पष्टाः | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| र. | च. | मं. | बु. | गु. | शु. | श. | रा | के. |
| ९ | ५ | ६ | ९ | ९ | | ३ | २ | १ |
| ८ | २२ | २० | १२ | १९ | १५ | २२ | २२ | २२ |
| ३० | ९ | ३६ | १६ | ३१ | ३१ | २४ | २४ | २४ |
| ६ | ४७ | ० | ९ | १३ | ४८ | ३६ | ३३ | ३६ |
| ६१ | ८१५ | ४४ | ५६ | १३ | ७० | ३ | ३ | ३ |
| १६ | २४ | १ | २२ | ५० | ७ | ११ | ११ | ३ |

अब पञ्चांग में स्थित नक्षत्र में चन्द्रानयन अर्थात् चन्द्रमा के स्पष्ट करने की विधि बताते हुए कहते हैं—वर्ष प्रवेश के समय जो नक्षत्र हो उसमें इष्टकाल पर्यन्त जितनी देर तक भोग कर लिया हो, उतने समय की घटिकायें बना ले। उन घटिकाओं की जो संख्या हो उसे ६० से गुणा करे। फिर उसमें भभोग यानी इष्ट नक्षत्र द्वारा भोगी हुई पूर्ण संख्या से भाग दे। जो लब्ध हो उसको ६० से गुणा किये हुए अश्विनी आदि गत नक्षत्रों में जोड़ दे। फिर उसको २ से गुणा करे। उसमें ९ का भाग दे। जो लब्ध हो, उसी को अंश समझे। शेष को फिर ६० से गुणा करे और ९ का भाग दे। जो लब्ध हो उसे कला जाने। शेष को फिर ६० से गुणा करके ९ से भाग दे, जो लब्ध हो उसे विकला समझे। उपर्युक्त अंशों में ३० का भाग देकर राशि बना ले। अब गतिसाधन का प्रकार बताते हुए कहते हैं—४८००० को ६० से गुणा करे और उसमें भभोग का भाग दे दे। जो लब्ध हो उसे ही चन्द्रमा की कलात्मिका गति समझे।

उदाहरण—जैसे वर्ष के प्रवेश समय हस्त नक्षत्र भुक्त घटिका ४१।२४ है। इसको इष्ट घटी १२।१८ में जोड़ दिया। ऐसा करने पर इष्ट घटी पर्यन्त हस्त नक्षत्र की भुक्त घटिका हुई ५३।४२ पलमय ३२।४२ को ६० से गुणा किया तो १९३३२० भाज्य हुआ। फिर इसमें भभोग ५८।५२। पलमय ३५३२ से भाग दिया तो लब्ध हुआ ५४।४४।१ अश्विनी आदि गत नक्षत्र पर्यन्त की १२ संख्या को ६० से गुणा करने पर ७२० हुआ इसको पूर्व लब्ध ५४।४४।१ में जोड़ दिया तो ७७४ हुये। अब ७७४।४४।१ को द्विगुणित किया तो १५४८।८८।२ हुए। इनमें ९ का भाग दिया तो लब्ध अंशादिक हुये १७२।९।४७ इन अंशों में ३० से भाग दिया तो तात्कालिक चन्द्रराश्यादि चन्द्र स्पष्ट हुआ ५।२२।९।४७।

गतिसाधन का उदाहरण—४८०'० को ६० से गुणा किया तो २८८०००० हुए। इसी में भभोग से भाग दिया तो ८१५।२४ कलादि चन्द्रमा की गति विगति हुई ॥ १९ ॥

अथ भावसाधनमाह—

**पूर्वं नतं स्याद्दिनरात्रिखण्डं दिवानिशोऽरिष्टघटीविहीनम् ।**
**दिवानिशोऽरिष्टघटीषु शुद्धं द्युरात्रिखण्डं त्वपरं नतं स्यात् ॥२०॥**

तत्काले सायनार्कस्य भुक्तभोग्यांशशङ्गुणात् ।
स्वोदयात्खाग्नि ३० लब्धं यद् भुक्तं भोग्यं रवेस्त्यजेत् ॥२१॥

इष्टनाडीपलेभ्यश्च गतगम्यान्निजोदयान् ।
शेषं खत्र्या ३० हतं भक्तमशुद्धेन लवादिकम् ॥२२॥

अशुद्धशुद्धे भे हीनयुक्तनुर्व्ययनांशकम् ।
एवं लङ्कोदयैर्भुक्तं भोग्यं शोध्यं पलीकृतात् ॥२३॥

पूर्वपश्चान्नतादन्यत्प्राग्वत्तद्दशमं भवेत् ।
सषड्भे लग्नखे जायातुर्यौ लग्नोनतुर्यतः ॥२४॥

अग्रे त्रयः षडेवं ते भार्द्धयुक्ताः परेऽपि षट् ।
खेटे भावसमे पूर्णं फलं सन्धिसमे तु खम् ॥२५॥

षष्ठांशयुक्तनुः सन्धिरग्रे षष्ठांशयोजनात् ।
त्रयः ससन्धयो भावाः षष्ठांशोनैकयुक्सुखात् ॥२६॥

अथ सप्तभिः श्लोकैर्भावसंधिसाधनमाह । तत्र लग्नसाधनमिष्टकालादिसाधनं दशमलग्नसाधनम् नतोन्नतसाधनम् । तत्रादौ नतोन्नतसाधनज्ञानमाह । दिनार्धपूर्वमिष्टकाले सति दिनखण्डं दिनार्धं दिनगतघटीभिर्हीनं कार्यम् तदा दिनपूर्वनतं स्यात् । रात्रौ रात्र्यर्धपूर्वमिष्टकाले सति रात्रिखण्डं रात्र्यर्धं रात्रिगतघटीभिः हीनं कार्यं तदा रात्रिपूर्वनतं स्यात् । अथ तत्क्षणं यदा दिनार्द्धादुपरीष्टकालस्तदा सूर्योदयादिषु शुद्धं शोध्यम् द्युखडं दिनार्द्धं दिवसे अपरं नतं पश्चिमनतं स्यात् तथा रात्र्यर्द्धादुपरीष्टकाले सति सूर्यास्तादिघटीषु शोध्यम् रात्र्यर्द्धं रात्रौ पश्चिमनतं स्यात् ॥ तात्कालिकोऽर्क अयनांशैर्युक्तं कार्यः तस्य भुक्तभोग्यांशसंगुणादिति यदा ऋणलग्नं साध्यते तदा भुक्तांशा ग्राह्याः यदा धनलग्नसाधनं क्रियते तदा भोग्यांशा ग्राह्यास्तैस्तः स्वोदयो गुणनीयः त्रिंशद्भक्तरवेर्भुक्तमथवा भोग्यं यल्लब्धं तत् इष्टघटीपलेभ्यस्त्यजेत् शोधयेत् । तदनंतरं शेषात् गतगम्यनिजोदयान् त्यजेत् । तद्यथा यदा भुक्तकालः साध्यते तदा गुणितोदयात्पृष्ठोदयाः शोध्याः तदा भोग्यकालः साध्यते तदा गुणितोदयात् अग्रिमोदयाः शोध्याः शोधिते यच्छेषं यत् खाग्न्या ३० हतम् अशुद्धन ( यः शोधितो न शुद्धयति

सः अशुद्धोदयः तेन ) भक्तं फलमंशादिकं ग्राह्यं तत् अशुद्धभे हीनम् कार्यम् शुशुभे युक्कार्यम् । तद्यथा ऋणलग्नसाधने धनलग्नसाधने च मेषाद् गणनया यद्राशिसंख्यांकः अशुद्धोदयो भवति तद्राशिसंख्यामध्ये लवादिकं हीनं योज्यं तदनंतरं व्ययनांशकमयनांशकै रहितं कार्यम् तनुः लग्नम् स्यात् । एवमनया रीत्या लंकोदयैः कृत्वा रवेर्भुक्तं भोग्यं साध्यम् तत्पलीकृतात् पूर्वपश्चिमनताच्छोध्यम् अन्यदवशिष्टं तत्कर्म तत् प्राग्वत्पूर्वरीत्या साध्यं तद्दशमं भवेत् । तद्यथा तदा पूर्वनतम् भवति तदा पूर्वनतमिष्टकालं प्रकल्प्य लंकोदयैः कृत्वा रवेर्भुक्तं शोध्यम् अन्या क्रिया ऋणलग्नवत् यदा पश्चिमनतं भवति तदा पश्चिमनतमिष्टकालं प्रकल्प्य लंकोदयैः कृत्वा रवेर्भोग्यं शोध्यम् अन्यक्रिया धनलग्ननवत् कार्या तद्दशमं भवेत् ।

अथ लग्नदशमभावावुक्तावन्यभावसाधनमाह । सषड्भे इति । लग्नं राशिषट्कयुतं जाया सप्तमभावो भवति एवं सषड्भे खे तुर्यश्चतुर्थभावो भवति एवं भावचतुष्टयं जातम् ॥ अथ लग्नोनतुर्यतः लग्नचतुर्थभावाच्छोध्यम् शेषस्य षष्ठांशो राश्यादिस्तेन युक् तनुर्लग्नं कार्यं सलग्नद्वितीयभावयोः संधिः स्यात् लग्नस्य विरामसंधिः स्यात् धनभावस्यारंभसंधिरिति सर्वत्र ज्ञेयम् अग्रे षष्ठांशयोजनादिति स एवागतसंधिः तेन षष्ठांशेन युक्तोऽग्रे द्वितीयभावः स्यात् द्वितीयभावः षष्ठांशयुक्तः द्वितीयतृतीयभावयोः संधिः स्यात् अयं षष्ठांशयुक्तः तृतीयभावः स्यात् अयं षष्ठांशयुक्तः तृतीयचतुर्थभावयोः संधिः स्यात् एवं त्रयः ससंधया भावा जाताः तदनंतरमग्रे त्रयः ससंधयो भावाः साध्याः तद्यथा पूर्वानीतषष्ठांशं रूपमध्ये संशोध्य अनेन राश्यादिना सुखभावो युक्तश्चतुर्थपञ्चमभावयोः संधिः स्यात् अयमेव संधिः पुनस्तेन युक्तः पञ्चमभावः स्यात् । अनेन युक्तः पञ्चमषष्ठभावयोः संधिः स्यात् । अयं तेन युक्तः षष्ठभावो भवति अयं तेन युक्तः षष्ठसप्तमभावयोः संधिः स्यात् एवं षट्संधयो भावाः जाताः एते भार्द्धं षड्राशयः तैर्युक्ताः संत अवशिष्टषड्भावाः ससंधयः स्युः ।

एवं भावसंधिनिष्पत्तिप्रयोजनमाह । खेट इति । यो ग्रहो यद्भावस्थो भवति स चेद्भावस्य राश्यंशकलाविकलाभिस्तुल्यः स्यात् तदा स ग्रहः तद्भावस्थं शुभमशुभं वा फलं पूर्णविंशतिविश्वात्मकं ददाति सन्धितुल्ये ग्रहे शून्ये शून्यं फलं भवति ॥ २०-२६ ॥

अब सात श्लोकों से लग्नादि भावों के साधन का प्रकार बताते हैं। इसमें पहले नत और उन्नत साधन करना आवश्यक होता है। एक दिन के आधे भाग में यदि दिन की गत इष्ट घटी घटा दे तो दिन में पूर्वनत होता है। अर्धरात्रि में यदि रात्रिगत इष्ट घटी घटा दे तो रात्रिपूर्वनत होता है। दिन-रात्रि की इष्ट घटी में दिन-रात्रि खण्ड घटा देने से दिवारात्रि परनत हो जाता है अर्थात् दिनगत इष्ट घटी में दिनार्ध घट जावे तो दिवापरनत और रात्रिगत इष्ट घटी में रात्रिखण्ड घट जावे तो रात्रिपरनत हो जाता है। रात्रिगत घटी का तात्पर्य सूर्यास्त के बाद की घटी से है। दिन और रात्रि इन दोनों का भाग अलग-अलग करके ही नतसाधन किया जाता है। नत घटी की संख्या को दिनार्ध में घटाने से शेष अंक उन्नत घटी आदि के हो जाते हैं। अब लग्नादि द्वादश भावों का साधन-प्रकार बताते हैं—जो तात्कालिक स्पष्ट सूर्य हो, उसमें अयनांश जोड़ दे। ऐसा करने से सायन सूर्य बन जायेगा। अब यदि ऋणलग्न अर्थात् भुक्त प्रकार से लग्न बनाना हो तो उपर्युक्त साधन सूर्य के भुक्त अंश से और यदि धनलग्न अर्थात् भोग्य प्रकार से लग्न बनाना हो तो भोग्य अंशों से स्वदेशी उदय पल को गुणा करे। फिर उस गुणित अंक में ३० का भाग दे दे। ऐसा करने से सूर्य का भुक्त अथवा भोग्य मान ( पल ) निकल आयेगा। इस पल को इष्टकाल के घटी पल में घटा दे। जो पल शेष बचे हों उनमें गत या गम्य राशियों का उदयमान घटावे। ऐसा करने पर यदि उदयमान घट जाय तो शुद्ध और न घटे तो अशुद्धराशि समझ लें। इसके अनन्तर इष्टकाल के शेष पलों को ३० से गुणा करके उसी अशुद्ध राशि को स्वोदयमान का भाग देवे, जो अंशादि लब्ध हों उनको अशुद्ध राशि के अंक में जोड़ दे। इस प्रकार जोड़ने के अनन्तर उसी अंक में अयनांश घटा देने से लग्न निकल जाता है। इसी प्रकार लंकोदय से भुक्त और भोग्य पलों का साधन करके लंकोदय राशि के प्रमाण से गुणा करे। फिर उस गुणित संख्या में ३० का भाग देकर पलादिकों को ग्रहण करे। फिर उन अंकों को पूर्वनत या परनत में घटावे फिर पहले लग्नसाधन का जो क्रम बता आये हैं उसी के अनुसार साधन करने से दशम लग्न बन जाता है। भावार्थ यह है कि जब पूर्वनत हो तो पूर्वनत को ही इष्टकाल मानकर और परनत हो तो परनत को इष्टकाल मानकर लंकोदयराशि के सूर्य का भुक्त-भोग्यकाल बनाकर शोधन करने से दशम लग्न सिद्ध होता है। यदि लग्न में ६ राशियाँ और जोड़ दी जाती हैं तो सप्तम भाव बनता है। इसी प्रकार दशम भाव में ६ राशियाँ जोड़ देने से चतुर्थ भाव सिद्ध होता है। अब अन्य भावों के साधन की विधि बताते हुए

कहते हैं कि लग्न को चतुर्थ भाव में घटाकर ६ का भाग दे। इस षष्ठांश को लग्न में जोड़ने से लग्न की सन्धि होती है। इस सन्धि में षष्ठांश जोड़ देने से द्वितीय भाव बनता है। उसमें भी षष्ठांश जोड़ने से दूसरे भाव की सन्धि बनती है। इस सन्धि में षष्ठांश जोड़ देने से तीसरा भाव बनता है। इस तीसरे भाव में षष्ठांश युक्त करने पर तृतीय भाव की सन्धि बनती है। इस सन्धि में षष्ठांश जोड़ देने से चतुर्थ भाव बनता है। फिर उसी षष्ठांश को १ राशि में घटाकर शेष को चतुर्थ भाव को जोड़ने पर चतुर्थ भाव की सन्धि बनती है। इसमें षष्ठांश मिलाने पर पञ्चम भाव बनता है। इस पञ्चम भाव में षष्ठांश जोड़ने से पञ्चम भाव की सन्धि बनी। इसमें षष्ठांश जोड़ देने से षष्ठ भाव बनता है। षष्ठ भाव में षष्ठांश जोड़ने से षष्ठभाव की सन्धि होती है। इस प्रकार ६ भाव बन जाते हैं। इसी रीति से प्रत्येक सन्धियों और भावों मे ६, ६ राशि जोड़ते जाने से सप्तम, अष्टम, नवम आदि द्वादश भाव पर्यन्त ससन्धि सभी भाव बन जाते हैं। जो ग्रह जिस भाव में हो वह यदि उस भाव की राशि, अंश, कला और विकला के बराबर हो तो पूर्ण फल देता है और सन्धि के तुल्य होने पर वह ग्रह शून्य फलदायक हो जाता है॥ २०-२६॥

लग्नायनयने विशेषमाह—

भुक्तं भोग्यं स्वेष्टकालान्न शुद्ध्येत्<br>
त्रिंश ३० घ्निघ्नात्स्वोदयाप्तं लवाद्यम्।<br>
हीनं युक्तं भास्करे तत्तनुः स्यात्<br>
रात्रौ लग्नं भार्द्धयुक्ताद्रवेस्तु॥ २७॥

अथ सूर्यस्य भुक्तमथवा भोग्यमुक्तरीत्या चानीतं यद्यदिष्टकालघटीपलेभ्यो न शुद्धचेत् तदा केनोपायेन लग्नसाधनं कर्त्तव्यमित्यत आह। भुक्तमिति। भुक्तं भोग्यं यदेष्टकालनाडीपलेभ्यो न शुद्धचेत् तदा इष्टनाडीपलानि त्रिंशद्गुणितानि कार्याणि सायनसूर्यस्य राश्युदयेन भाज्यानि एव लवाद्यं ग्राह्यम्। हीनं युक्तं भास्करे कार्यं तद्यथा यदा रवेर्भुक्तमानीतं भवति तदा लवाद्यं फलं सूर्यमध्ये हीनं कार्यम्। यदा भोग्यमानीतं तदा भवति लवाद्यं फलं सूर्यमध्ये युक्तं कार्यम्। तत्तनु लग्नं स्यात्। रात्रौ लग्नसाधनं चेत् क्रियते तदा राशिषट्कयुक्ताद्रवेः सकाशाल्लग्नं साध्यम्। रात्रौ दशमलग्नसाधनेऽपि राशिषट्कयुक्ताद्रवेः सकाशाद्भुक्तभोग्यं साध्यम्।

अत्रोदाहरणम्--अस्य जन्मभूमावुदयाः तत्कालिकोऽर्कः ९।७।३०।६ अयनांश १८।२६ युक्ताः ९।२५।५६।६ अस्य भोग्यांशैः ४।३।५४ मकरराशेरुदयो २९८ गुणितः १२।११।२२।१२ अयं त्रिंशद् ३० भक्तः जातो भोग्यकालः ४०।२२।४४ अयमिष्टनाडी १०।१८।३० पलेभ्यः ७३८।३० शोधितः शेषं ६९७।६ मकरादग्रे कुम्भोदयः २३९ शेषाच्छोधिते शेषम् ४५८।३७।१६ मीनादग्रे मेषोदयः २०३ शेषाच्छोधिते शेषम् २५५।३७।०६ मीनादग्रे मेषोदयः २०३ शेषाच्छोधिते शेषम् ५२।३७।१६ मेषादग्रे वृषभोदयः १३९ अयं शेषात् ५२।३७।१३ न शुद्धचति अतः शेषम् ५२।३७।१६ खत्र्या ३० हतं १५७८।३८ अशुद्धोदयेन २३९ भक्तं लब्धमंशादिकम् ६।३६।१८ इदमशुद्धात्पूर्वमेषाद्गणनया एको राशिस्तेन युक्तं १।६।३६।१६ इदमयनांशैः १८।२६ हीनं जातं लग्नं० १८।१०।१८ राशिषट्कयुतं जातं जायाभवनम् ६।१८।१०।१८ ॥

अथ दशमलग्नस्योदाहरणम्--तत्र लंकोदयाः दिनार्द्धम् १२।४४ दिनगतघटीभिः १२।१८।३० हीनं जातं पूर्वनतं २।२५।३० अयमिष्टकालो लंकोदयैः कृत्वा सायनांशसूर्यस्य भुक्तभागा गुणनीयाः उपरितनांकः त्रिशद्भृतः लब्धं भुक्तकालः जातो भुक्तकालः २७९।०४'१ अयं घटीपलेभ्यः २५।३० न शुद्धचति अतः शेषं २५।३० त्रिंशद्गुणितं ७६५ स्वोदयेन ३२३ भुक्तं पललवादिकं २।२२।६ इदं राश्यादिसूर्यमध्ये ९।७।४०।६ हीनं जातम् ९।५।८।० इदं राशिषट्कयुतं जातं सुखभवनं ३।५।८।० लग्नहीनचतुर्थभावस्य शेषम् २।१६।५७।४२ इदं षड्भक्तं लब्धम् राश्यादि ०।१२।४९।७ अनेन युक्तं लग्नं जातो लग्नस्य विरामसंधिः १।०।५९।५५ अयं पष्ठांशेन युतो जातो द्वितीयः १।१३।४९।३२ अयं षष्ठांशेन युतो जातो द्वितीयभावस्य संधिः १।२६।३९।९ अयं षष्ठांशेन युतो जातस्तृतीयभावः २।९।२८।४६ अयं षष्ठांशेन युतो जातस्तृतीयभावस्य संधिः २।२२।१८।२३ प्रागानीतषष्ठांशः ०।१२।४९।३७ अयं रूपाच्छोधितः शेषम् ०।१७।१०।२३ अनेन सुखभावो युक्तः जातः सुखभावस्य संधिः ३।२४।१८।२३ अयं तेन युक्तः जातः पंचमभावः ४।९।२८।४६ अयं तेन युक्तः जातः पंचमभावस्य संधिः ४।२६।३९।९ अयं तेन युक्तः जातः षष्ठभावः ५।१३।४९।३२ अयं तेन युक्तः जातो रिपुभावस्य संधिः ६।०।५९।५५ एते राशिषट्कयुक्ताः अवशिष्टाः ससन्धयो भावा जाताः सर्वे एकत्र लिख्यन्ते ॥ २७ ॥

पूर्वोक्तरीति से साधित किया हुआ सूर्य का भुक्त अंश वा भोग्यकाल यदि इष्ट-काल की घटी या पल में न घट सके तो किस प्रकार से लग्न साधन करना चाहिए, इस विषय की विवेचना करते हुए कहते हैं--यदि सूर्य का भुक्त या भोग्यकाल इष्ट घटी पल में न घटे यानी इष्टकाल से न्यून या अधिक हो तो इष्ट-घटी-पलों को ३० से गुणा करे और सायन सूर्य ( अर्थात् सूर्य जिस राशि में हो उसके उदयमान ) से भाग दे । ऐसा करने पर जो अंशादिक लब्ध हों उनको यदि भुक्त-काल हो तो घटा दे और यदि भोग्यकाल हो तो उसी में जोड़ दे । इसी रीति से लग्न बन जायेगी । यदि रात्रि में लग्न साधन कर रहे हों तो सूर्य में ६ राशि और जोड़कर लग्न साधन कर लें । रात्रि के ही समय में यदि दशम लग्न साधनी हो तो उस में भी ६ राशि और जोड़ देने से सूर्य का भुक्त और भोगकाल सध जाता है ।। २७ ।।

| जन्मभूमावुदयचक्रम् | | | | | |
|---|---|---|---|---|---|
| क | सिं | क | मि | वृ | मे |
| [illegible] | ३[illegible]९ | [illegible]८ | २[illegible]८ | २३९ | २०३ |
| तु | वृ | [illegible] | म | कुं | मी |

| लंकोदयचक्रम् | | | | | |
|---|---|---|---|---|---|
| क | सिं | क | मि | वृ | मे |
| [illegible]८ | २९९ | ३२३ | ३२३ | २९९ | २७८ |
| तु | वृ | ध | म | कुं | मी |

| तन्वादिद्वादशभावाः ससन्धयः स्युः | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| त. | ध. | स | सु. | पु. | रि | जा | मृ. | ध. | क. | आ | व्य. |
| ० | १ | २ | ३ | ४ | ५ | ५ | ७ | ८ | ९ | १० | ११ |
| १८ | १३ | ९ | ५ | ९ | १३ | १८ | १८ | ९ | ५ | ९ | १३ |
| १० | ४९ | २८ | ८ | २८ | ४९ | ० | ४९ | २८ | ८ | [illegible] | ४९ |
| ८ | ३२ | ४६ | ० | ४६ | ३२ | ८ | ३२ | ४६ | ० | ४६ | ३२ |
| सं. | सं. | सं. | सं. | सं. | सं. | सं. | सं | सं | स | सं. | सं |
| १ | १ | २ | ३ | ४ | ६ | [illegible] | ७ | ८ | ९ | १० | ० |
| ० | २६ | २२ | २२ | २६ | ० | ० | २६ | २२ | २२ | २६ | ० |
| ५९ | ३६ | १८ | १८ | ३६ | ५९ | ५९ | ३६ | १८ | १८ | ३६ | ५९ |
| [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | [illegible] | ५५ |

भावकुण्डली        लग्नकुण्डली

अथ भावस्थग्रहफलम्--

**खेटे सन्धिद्वयान्तःस्थे फलं तद्भावजं भवेत् ।**
**हीनेऽधिके द्विसन्धिभ्यां भावे पूर्वाऽपरे फलम् ॥ २८ ॥**

खेटे सन्धिद्वयांतःस्थे इति । तद्यथा ग्रहे आरम्भसन्धेः सकाशात् अधिके सति विरामसन्धेः सकाशात् न्यूने सति तदा ग्रहो यस्मिन् भावे वर्तते तद्भावजं भवेत् । द्विसन्धिभ्यां हीनेऽधिके ग्रहे सति पूर्वापरभावे फलं भवेत् । तद्यथा आरम्भसन्धेः सकाशात् ग्रहे हीने सति यद्भावे वर्तते तद्भावात्पूर्वभावस्य फलं ददाति यदा विरामसन्धेः सकाशात् ग्रहोऽधिको भवति तदा अग्रिमभावस्य फलं ददाति ॥ २८ ॥

अब भावों में स्थित ग्रहों का फल बताते हुए कहते हैं—जो ग्रह दोनों सन्धियों के मध्यभाग में विद्यमान हो तो वह दोनों सन्धियों के बीचवाले भाग का फल देता है । कहने का तात्पर्य यह है कि आरम्भ सन्धि से लेकर विराम सन्धि पर्यन्त का न्यून या अधिक ग्रह जिस भाव में विद्यमान हो उसी भाव का फलदायक होता है और विराम सन्धि से हीन ग्रह विद्यमान हो तो वह पूर्व भाव का फलदायक होता है और विराम सन्धि से अधिक ग्रह विद्यमान हो तो वह अग्रिम भाव का फल प्रदान करता है ॥ २८ ॥

**ग्रहसन्ध्यन्तरं कार्यं विंशत्या २० गुणितं भजेत् ।**
**भावसन्ध्यन्तरेणाप्तं फलं विंशोपकाः स्मृताः ॥ २९ ॥**



अथ ग्रहाणां विंशोपकात्मकं भावफलमाह । उदाहरणमेव व्याख्या ।

सूर्यः ९।७।३०।६ अस्य सन्धिः ९।२२।१८।२३ अनयोरंतरं १४।४८।७ विंशत्या २० गुणितं ९।२६।२।४० भावः ९।५।८।१।० सन्धिः ९।२२।१८।२३ अनयोरन्तरेण १७।१०।२३ भजेत् अथ सवर्णितो भाज्यः १०६५९४० भाजकः ६१८२३ भाजकेन हृते भाज्ये यदाप्तं फलं तदेव विंशोपकाः स्मृताः १७।१४ एवं चंद्रादीनाम् इति रव्यादीना विंशोपकात्मकानि भावफलानि ॥ २९ ॥

अब सभी भावों का विंशोपक फल बताते हुए कहते हैं—जिस भाव तथा सन्धि में ग्रह विद्यमान हो, उस ग्रह और सन्धि का अन्तर करे, इसके अनन्तर उसको २० से गुणा करे। ऐसा करने पर भाव और सन्धि में जो अन्तर हो उसको उसी से भाग दे दें। भाग देने पर जो अशादिक लब्ध हों वे ही विंशोपक कहे जाते हैं। विंशोपक का तात्पर्य यह है कि अमुक ग्रह इतने विस्वा फल-दायक होगा।

जैसे—स्पष्ट सूर्य २।१०।४२।३५ की सन्धि हुई २।२८।१४।४१ दोनों का अन्तर ०।१७।३२।०६ शेष रहे। इसको २० से गुणा किया तो २५।४२।०० भाज्य हुआ। और अब चतुर्थ भाव २।१२।४५।२६ की सन्धि २।२८।१४।४१ का अन्तर किया तो ०।१५।२९।१५ शेष रहे। यह भाजक हुआ। इनमें भाग देने के लिए भाज्य-भाजक दोनों एक जातीय करके ६० से गुणा कर दिया तो १२६२५२० संख्या हुई। और भाजक को एक जातीय किया तो ५७३५५ हुए। इनसे भाग दिया तो २२।०१ यह सूर्य का विंशोपक बल हुआ। जिसका आशय हुआ कि चतुर्थ भाव में सूर्य २२।०१ विस्वा फल देगा। इसी प्रकार चन्द्र-मंगल आदि ग्रहों का भी विंशोपक फल समझ लेना चाहिए ॥ २९ ॥

अथ राशीशद्रेष्काणेशानाह—

भौमोशनःसौम्यशशीनवित्सितारेज्यार्किमन्दाङ्गिरसो गृहेश्वराः ।
आद्याःगृजाद्यास्त्रितोऽपि मध्यमाः सितात्तृतीयाःक्रियतोदृकाणपाः ।३०।

अथ ग्रहाणां बलाबलं वक्ष्यति। तच्च ग्रहबलमधिकारं विना न अतस्तद्बलसाधनायादौ राशीशद्रेष्काणेशानाह। भौमेति। मेषस्य भौमः, वृषस्योशना शुक्रः, मिथुनस्य सौम्यो बुधः, कर्कस्य शशी चन्द्रः, सिंहस्य इनः रविः, कन्यायाः वित बुधः तुलायाः सित शुक्रः वृश्चिकस्यारो भौमः, धनुषः इज्यो गुरुः मकरस्यार्किः शनिः कुम्भस्य मंदः शनिः, मीनस्यांगिराः गुरुः एते गृहेश्वरा द्वादशराशिस्वामिनो भवन्ति।

पूर्वोक्त चारों प्रकार के हर्षबल में पांच-पांच विश्वा का बल होता है। जिस ग्रह में चारों प्रकार का बल पाया जाय वह पूरे २० विश्वा का बलवान् माना जायेगा ॥ ६२-६३ ॥

| | र. | च. | मं. | बु. | गु. | शु. | श. |
|---|---|---|---|---|---|---|---|
| स्थान | ० | ० | ० | ० | ० | ० | ० |
| उस्व | ० | ० | ० | ० | ५ | ० | ५ |
| त्रि. | ५ | ० | ० | ५ | ० | ० | ५ |
| दि. | ५ | ० | ५ | ० | ५ | ० | ० |
| योगः | १० | ० | ५ | ५ | १० | ५ | १० |

लग्नकुण्डली

२ १२
३ लग्न १ ११
रा. ४ केतु. १०
५ श. ७ ९ मं. बु. गु.
चं६ शु.८

इति टीकाद्वयोपेतनीलकण्ठ्यां संज्ञातन्त्रे
षोडशयोगाध्यायः ॥ २ ॥

□

# संज्ञातन्त्रे सहमाध्यायः (३)

अथ सहमान्याह—

**पुण्यं गुरुर्ज्ञानयशोऽथ मित्रं माहात्म्यमाशा च समर्थता च।**
**भ्राता ततो गौरवराजतातमाता सुनो जीवितमम्बुकर्म ॥१॥**
**मान्द्यं च मन्मथकली परतः क्षमोक्ताशास्त्रं संबन्धुसहमं त्वथ बन्दकं च।**
**मृत्योश्चसद्मपरदेशधनान्यदाराःस्यादन्यकर्मसवणिक्त्वथकार्यसिद्धिः।**
**उद्वाहसूतिसन्तापाः श्रद्धा प्रीतिर्बलं तनुः।**



**जाड्यव्यापारसहमे पानीयपतनं रिपुः ॥३॥**

**शौर्योपायदरिद्रत्वं गुरुताऽम्बुपथाभिधम् ।**
**बन्धनं दुहिताऽश्वश्च पञ्चाशत्सहमानि हि ॥४॥**

तत्रादौ चतुर्भिः श्लोकैः पञ्चाशत्सहमान्याह--पुण्यमिति । स्पष्टार्थः ॥१-४॥

१ पुण्य, २ गुरु, ३ ज्ञान, ४ यश, ५ मित्र, ६ माहात्म्य, ७ आशा, ८ समर्थता, ९ भ्राता, १० गौरव, ११ राज, १२ पिता, १३ माता, १४ सुत, १५ जीवित, १६ अम्बु, १७ कर्म, १८ रोग, १९ कामदेव, २० कली, २१ क्षमा, २२ शास्त्र, २३ बन्धु, २४ बन्दक, २५ मृत्युसद्म, २६ परदेश, २७ धन, २८ अन्यदारा, २९ अन्यकर्म, ३० वणिक्, ३१ कार्यसिद्धि, ३२ विवाह, ३३ सूतिका, ३४ संतान, ३५ श्रद्धा, ३६ प्रीति, ३७ बल, ३८ तनु, ३९ जड़ता, ४० व्यापार, ४१ पानीयपतन, ४२ शत्रु, ४३ शौर्य, ४४ उपाय, ४५ दरिद्रता, ४६ गुरुता, ४७ अम्बुपथ, ४८ बन्धन, ४९ दुहिता और ५० अश्व ये पचास प्रकार के सहम होते हैं ॥ १-४ ॥

| शुद्धाः ग्रहाः | | | | | | | |
|---|---|---|---|---|---|---|---|
| र. | चं. | मं. | बु. | गु. | शु. | श. | ल. |
| ९ | ५ | ८ | ८ | ८ | ७ | ६ | ० |
| ७ | २२ | १४ | १२ | २९ | २४ | ६ | १८ |
| ३० | ९ | ३२ | १६ | ३५ | ३१ | ४६ | ३ |
| ६ | ४७ | ३६ | ८ | १३ | ४८ | ५४ | ५० |

अथ पुण्यसहमसाधनमाह—

**सूर्योनचन्द्रान्वितमह्नि लग्नं वीन्द्वर्कयुक्तं निशि पुण्यसंज्ञम् ।**
**शोध्यर्क्षशुद्ध्याश्रयभान्तराले लग्नं न चेत्सैकभमेतदुक्तम् ॥५॥**

सूर्योनेति । अह्नि दिवसे वर्षप्रवेशश्चेत्तदा चन्द्रमध्ये रविः शोध्यः । निशि रात्रौ चेत्तदा सूर्याच्चन्द्रः शोध्यः । लग्नं योज्यं राश्यादि पुण्यसंज्ञं सहमं भवेत् । अथ सर्वत्र सहमानयने विशेषसंस्कार उच्यते । शोध्यर्क्षेति । शोध्यर्क्षशुद्ध्याश्रयभयोरन्तराले लग्नराशिश्चेन्नास्ति तदा सहमे एको

राशिर्योज्य इति तद्यथा। यो ग्रहः शोध्यते न्यूनः क्रियते स शोध्यः। तस्य ऋक्षं राशिः शोध्यग्रहराशेः सकाशादित्यर्थः। शुद्धचाश्रयभं यावत्। तद्यथा यस्मिन् ग्रहे शोध्यो ग्रहः शोध्यते स शुद्ध्याश्रयो ग्रहः। तस्य भं राशिः अनयोः शोध्यशोधकयोरन्तराले मध्ये चेल्लग्नं न भवति तदोक्तं राश्यादिपुण्यसहमं सैकभमेकराशिसहितं कार्यम्। यदि शोध्यशोधकयोर्मध्ये लग्नं भवति, तदैकराशिर्न योज्य इत्यर्थः सिद्धम्। अशोध्यर्क्षशुद्धचाश्रये गृहे इत्युपलक्षणं भावसहमेऽपि बोध्यम्। अग्रे उक्तमस्ति वित्तपमर्थभावादिति पुण्याद्भौममिति क्षेत्रग्रह ऋक्षभादिभवनमेते राशिपर्यायाल्लग्नमिति योजकोपलक्षकं ज्ञेयम्। उदाहरणम् - सूर्यः ९। ७। ३०। ६ चन्द्रमध्ये ५। २२। ९।४७ शोधितः शेषम् ८। १४। ३९। ४१ लग्नं ०। १८। ३। ५४ युतं जातं पुण्यम् ९। २। ४३। ३५ ॥५॥

अब पुण्य सहम को साधने का प्रकार बताते हुए कहते हैं--यदि दिन के समय वर्ष प्रवेश हुआ हो तो चन्द्रमा में सूर्य को घटावे और यदि रात्रि में वर्ष प्रवेश हो तो सूर्य में चन्द्रमा को घटाना पड़ेगा। इस प्रकार शोधित सूर्य या चन्द्रमा में लग्न को जोड़ देने से पुण्यसहम बन जाता है। पुण्यसहम को साधन करने के विषय में इतना और ध्यान में रखना चाहिए कि यदि शोध्य तथा शुद्धचाश्रय राशि के बीच में लग्न न आ सके तो १ राशि और जोड़नी पड़ती है। जो ग्रह घटाया जाता है, वह शोध्य और जिससे ग्रह शोधा जाता यानी जिसमें घटाया जाता है, वह शुद्धचाश्रय कहलाता है ॥ ५ ॥

अथ गुरुविद्यायशःसहमानां साधनमाह--

**व्यत्यस्तमस्माद्गुरुविद्ययोस्तु संसाधनं पुण्यवियुक्सुरेज्यः।**
**दिवा विलोमं निशि पूर्ववत्तु यशोऽभिधं तत्सहमं वदन्ति ॥६॥**

व्यत्यस्तमिति। अस्मात्पुण्यसहमसाधनाद्वचत्यस्तं विपरीतं गुरुविद्ययोः सहमयोस्तु संसाधनं कार्यम्। तद्यथा दिवा रविमध्ये चन्द्रः शोध्यः लग्नं योज्यम्। रात्रौ वर्षप्रवेशश्चेत्तदा चन्द्रमध्ये रविः शोध्यः लग्नं योज्यम्। ते गुरुविद्यासहमे भवतः। पुण्यसहमेन वियुक् ऊनः सुरेज्यो गुरुः कार्यो दिवा। निशि रात्रौ विलोमं विपरीतं पुण्यसहममध्ये गुरुः कार्यो दिवा। निशि रात्रौ विलोमं विपरीतं पुण्यसहममध्ये गुरुः शोध्यः पूर्ववदिति लग्न-योगः॥ शोध्यर्क्षेत्यादि संस्कारश्च सर्वत्र सहमे कार्यः। तद्यशोभिधं यशःसहमं बुधा वदन्ति। उदाहरणम्--रविमध्ये ९। ७। ३०। ६। चन्द्रः ५। २२। ९। ४७ शोधितः शेषम् ३। १५। २०। १९। लग्नयुतम् ४। ३।

२४। १३ सैकं जातं गुरुसहमम् ५। ३। २४। १३ इदमेव विद्यासहमम् ५। ३। २४। १ पुण्यसहमम् ९। २। ४३। ३५ गुरुमध्ये ८। २९। ३५। १३ शोधिते शेषम् ११। २६। ५१। २८ लग्नयुतं यशःसहमम् ०। १४। ५५। ३२ ॥६॥

अब गुरु विद्या तथा यशसहम के साधन का उपाय बताते हुए कहते हैं—पूर्वोक्त पुण्यसहम के ठीक विपरीत प्रकार के गुरु और विद्यासहम का साधन होता है। जैसे—दिन के समय वर्षप्रवेश हो तो सूर्य में चन्द्रमा को घटाकर लग्न जोड़े और रात्रि को वर्षप्रवेश हो तो चन्द्रमा में सूर्य को घटकर लग्न जोड़ना पड़ेगा। ऐसा करने से गुरु और विद्यासहम का साधन हो जायेगा। यशसहम का साधन करने के लिए—यदि दिन में वर्षप्रवेश हो तो पुण्य सहम को बृहस्पति में और रात्रि के समय वर्षप्रवेश हो तो पुण्यसहम में बृहस्पति को घटावे और लग्न मिलाकर संस्कार की रीति से सैकता करे तो यशसहम की सिद्धि हो जाती है। उदाहरण संस्कृत टीका में स्पष्ट है ॥ ६ ॥

अथ मित्रसहमसाधनमाह--

**पुण्यसद्म गुरुसद्मतस्त्यजेद्व्ययं ययो निशि सितान्वितं च तत्।**
**सैकता तनुवदुक्तरीतितो मित्रनामसहमं विदुर्बुधाः ॥७॥**

पुण्यसद्मेति। दिवा गुरुसद्मतः गुरुसहमतः पुण्यसद्म पुण्यसहमं त्यजेत् निशि रात्रौ व्यत्ययो विपरीतं पुण्यसहममध्ये गुरुसहमं शोधयेत् ततः सितेन शुक्रेणान्वितं युक्तं कार्यम्। अत्र लग्नयोगो न कार्यः शुक्रयुक्तत्वात्तनुवत् उक्तरीतितः सैकता कार्या। सा यथा शोध्यर्क्षशुद्धयाश्रय-भान्तराले शुक्रो न चेत्तदा सैकता कार्या तद्बुधाः मित्राणामसहमं विदुः।

उदाहरणम्--पुण्यसहमं ९। २४। ३। ३५ गुरुसहममध्ये ५। ३। २४। १३ शोधिते शेषम् ८। ०। ४०। ३८ शुक्रेण ७। २४। ३१। ४८ युतं सैकं जातं मित्रसहमम् ३। २५। १२। २६ ॥७॥

अब मित्रसहम के साधन का प्रकार बताते हुए कहते हैं—दिन को वर्षप्रवेश हो तो गुरुसहम में पुण्यसहम को घटा दे और रात्रि में वर्षप्रवेश हो तो पुण्यसहम में गुरुसहम को घटा दे और लग्न को न जोड़कर शुक्र को जोड़ दे। यदि शोध्य

और शोधक के मध्य में शुक्र न आता हो तो एक राशि और जोड़ दे तो मित्रसहम सिद्ध हो जायेगा। उदाहरण संस्कृत टीका में देख लें ॥ ७ ॥

अथ माहात्म्याशासहमयोरानयनमाह—

**पुण्याद्भौमं शोधयेदुक्तवत्स्यान्माहात्म्यं तन्नक्तमस्माद्विलोमम् ।**

**शुक्रं मन्दादह्नि नक्तं विलोममाशाख्यं स्यादुक्तवच्छेषमूह्यम् ॥८॥**

पुण्यादिति। पुण्यसहमाद्भौमं शोधयेत् दिवा ततः उक्तवल्लग्नयोगः सैकता च कार्या। नक्तं रात्रौ अस्माद्विलोमं विपरीतं भौममध्ये पुण्यसहमं शोध्यम्। तन्माहात्म्यसहमं स्यात्। अथाह्नि दिवसे मन्दाच्छनिमध्ये शुक्रं विशोधयेत्। नक्तं रात्रौ विलोमम्। शुक्रमध्ये शनिः शोध्यः। शेषं लग्नयोगाद्युक्तवदूह्यमुक्तरीत्या ज्ञेयम्। तदाशासहममिच्छासहमम् स्यात्।

उदाहरणम्—पुण्यसहममध्ये ९। २। ४३। ३५ भौमे ८। १४। ३२। ३६। शोधिते शेषम्। ०। १८। १०। ५९ लग्नयुतं सैकं जातं माहात्म्यसहमम् २। ६। १४। ५३। शनिमध्ये ६। ६। ४६। ५४ शुक्रे ७। २४। ३१। ४८ शोधिते शेषम् १०। १२। १५। ६ लग्नयुतं जातमाशासहमम् ११। ०। १९। ०॥८॥

अब माहात्म्य और आशासहम साधने का प्रकार बताते हुए कहते हैं—यदि दिन में वर्ष प्रवेश हो तो पूर्वोक्त पुण्यसहम में मंगल को घटावे और रात्रि में वर्षप्रवेश हो तो मंगल में पुण्यसहम को घटा दे तो माहात्म्यसहम की सिद्धि हो जाती है। आशासहम का साधन करने के लिए दिन में वर्षप्रवेश हो तो शनि में शुक्र को और रात्रि में वर्ष प्रवेश हो तो शुक्र में शनि को घटा और लग्न जोड़ देने से आशासहम सिद्ध हो जाता है ॥ ८ ॥

अथ सामर्थ्यभ्रातृसहमयोरानयनमाह—

**सामर्थ्यमारात्तनुपं विशोध्य नक्तं विलोमं तनुपे कुजे तु ।**

**जीवाद्विशुध्येत्सततं पुरावद् भ्राताऽर्किहीनाद् गुरुतः सदोह्यः ॥९॥**

सामर्थ्यमिति। आराद्भौमात्तनुपं लग्नस्वामिनं विशोध्य दिवसे नक्तं रात्रौ लग्नस्वामिमध्ये भौमं विशोधयेत् लग्नयोगः सैकता च पूर्ववत्तत्सामर्थ्यसहमं स्यात्। लग्नस्वामी चेद् भौमस्तदा किं कार्यमत आह—तनुपे इति। लग्नस्वामिनो भौमे सति जीवाद्विशुध्येत् सततं दिवारात्रौ च

तत्सामर्थ्यसहमं स्यात् । अथ सदाहोरात्रमार्किहीनात् शनिरहिताद् गुरुतः पुरावत्प्राक्संस्कारसहितात् भ्राता भ्रातृसहमं स्यात् ।

उदाहरणम्--भौमात्तनुपं विशोध्य इत्युक्तम् । अत्र लग्नस्वामी भौमोऽस्ति । अतः कारणात् गुरुमध्ये ८ । २९ । ३५ । १३ भौमे ८ । १४ । ३२ । ३६ । शोधिते शेषम् ० । १५ । २ । ३७ लग्नयुतं सैकं जातं सामर्थ्य-सहमम् २ । ३ । ६ । ३१ गुरुमध्ये ८ । २९ । ३५ । १३ शनौ ६ । ६ । ४६ । ५४ शोधिते शेषम् २ । २२ । ४८ । १९ लग्नयुतं सैकं जातं भ्रातृ-सहमम् ४ । १० । ५२ । १३ ॥९॥

अब सामर्थ्य और भ्रातृसहम साधन करने की रीति बताते हुए कहते हैं — यदि दिन में वर्षप्रवेश हो तो लग्नस्वामी को मंगल में और रात्रि में वर्षप्रवेश हो तो मंगल को लग्नस्वामी में घटाकर लग्न जोड़ देने से सामर्थ्यसहम की सिद्धि हो जाती है। यदि संयोग से मंगल ही लग्नस्वामी हो तो दिन-रात्रि किसी भी समय लग्नस्वामी मंगल को बृहस्पति में घटाकर पूर्वोक्त रीति से सैकता कर देने से सामर्थ्यसहम सिद्ध हो जाता है। भ्रातृसहम साधने के लिए—दिन-रात्रि चाहे किसी समय वर्षप्रवेश हो तो बृहस्पति में शनि को घटाकर सैकता करने पर भ्रातृसहम सिद्ध हो जायेगा ॥ ९ ॥

अथ गौरवराजतातसहमानयनगाह--

**दिने गुरोश्चन्द्रमपास्य नक्तं रविः क्रमादर्कविधू च देयौ ।**
**रीत्योक्तया गौरवमर्कमार्केरपास्य वामं निशि राजतातौ ॥१०॥**

दिन इति । दिने दिवसे गुरुमध्ये चन्द्रः शोध्यः रविर्योज्यः नक्तं रात्रौ गुरुमध्ये रविः शोध्यश्चन्द्रयोगः कार्यः । उक्तया रीत्या सैकता च कार्या । तद्गौरवसहमं भवति । तद्यथा—शोध्यर्क्षशुद्धयाश्रयभान्तराले क्रमेण दिवारात्रौ सूर्यचन्द्रौ न चेत्तदा सैकता कार्येत्यर्थः, दिने वर्षप्रवेश आर्केः शनिमध्ये अर्कं सूर्यं विशोध्य निशि रात्रौ वामः विपरीतं सूर्यमध्ये शनि-मपास्य लग्नयोगः सैकता च कार्या । राजतातसहमे भवतः ।

उदाहरणम्--गुरुमध्ये ८ । २९ । ३५ । १३ । चन्द्रे ५ । २२ । ९ । ४७ । शोधिते शेषम् ३ । ७ । २५ । २६ । रविणा ९ । ७ । ३० । ६ युतं सैकं जातं गौरवसहमम् १ । १४ । ५५ । [illegible] । शनिमध्ये ६ । ६ । ४७ । ५४ । सूर्ये शोधिते ९ । ७ । ३० । ६ । शेषम ८ । १९ । १८ । ४८ ।

लग्नं युतं जातं राजसहमं ६ । ७ । २२ । ४२ तातसहमं च ६ । ७ । २२ । ४२ ॥ १० ॥

अब गौरव, राज तथा तातसहम साधने की रीति बताते हुए कहते हैं-- यदि दिन को वर्षप्रवेश हो तो बृहस्पति में चन्द्रमा को घटाकर सूर्य को जोड़ दे। रात्रि को वर्षप्रवेश हो तो बृहस्पति में सूर्य को घटाकर चन्द्रमा को जोड़ देने से गौरवसहम सिद्ध हो जाता है। यदि शोध्य और शुद्धचाश्रय के मध्य में दिन को, सूर्य तथा रात्रि को चन्द्रमा न पड़ता हो तो सैकता करनी चाहिए। राजसहम और तातसहम का साधन करने के लिए--दिन को वर्षप्रवेश हो तो शनैश्चर में सूर्य की और रात्रि में वर्षप्रवेश हो तो सूर्य में शनि को घटाकर और लग्न को जोड़कर सैकता करने से राजसहम तथा तातसहम की सिद्धि हो जाती है ॥ १० ॥

अथ मातृपुत्रजीविताम्बुसहमानामानयनमाह--

**मातेन्दुतोपास्य सितं विलोमं नक्तं सुतोऽहर्निशमिन्दुमीज्यात् ।**
**स्याज्जीविताख्यं गुरुमार्कितोऽह्नि वामं निशीदं सममम्बयाऽम्बु ॥ ११ ॥**

मातेति । दिवसे इन्दुतश्चन्द्रमध्यं सितं शुक्रमपास्य संशोध्य विलोमं नक्तं रात्रौ शुक्रमध्ये चन्द्रः शोध्यः लग्नयोगः सैकता च कार्या तन्मातृसहमं स्यात् । अहर्निशं दिवारात्रौ वर्षप्रवेशे सति गुरुमध्ये चन्द्रः शोध्यः लग्नयोगः सैकता च कार्या तत्पुत्रसहमं स्यात् । अथाह्नि दिवसे शनिमध्ये गुरुः शोध्यः इदं निशि वामं गुरुमध्ये शनिः शोध्यः लग्नयोगः सैकता च कार्या तज्जीविताख्यं सहमं स्यात् । अम्बया समं च मातुः सहमतुल्यमम्बुसहमम् ।

उदाहरणम्—चन्द्रमध्ये ५ । २२ । ६ । ४७ । शुक्रे शोधिते ७ । २४ । ३१ । ४८ । शेषम् ६ । २७ । ३७ । ५६ । लग्नयुतं जातं मातृसहमं १० । १५ । ४१ । ५३ गुरुमध्ये चन्द्रे शोधिते शेषम् । ३ । ७ । २५ । २६ लग्नयुतं सैकं पुत्रसहमं ४ । २५ । २६ । २० । शनिमध्ये गुरौ शोधिते शेषम् । ६ । ७ । ११ । ४१ लग्नयुतं जातं जीविताख्यं सहमम् ६ । २५ । १५ । ३५ । मातुः सहममेवाम्बुसहमम् १० । १५ । ४१ । ५३ ॥ ११ ॥

अब माता, पुत्र, जीवित और अम्बुसहम साधन करने की रीति बताते हुए कहते हैं--दिन के समय वर्षप्रवेश हो तो शुक्र को चन्द्रमा में और रात्रि को वर्षप्रवेश हो तो शुक्र में चन्द्रमा को घटा और लग्न को जोड़ कर पूर्ववत् सैकता करने से मातृसहम की सिद्धि हो जाती है। दिन या रात्रि किसी भी समय

वर्षप्रवेश हो तो बृहस्पति में चन्द्रमा को घटाकर सैकता करने से पुत्रसहम सिद्ध हो जाता है। यदि दिन में वर्षप्रवेश हो तो बृहस्पति में शनि को और रात्रि में वर्षप्रवेश हो तो भी बृहस्पति में शनि को घटाने और लग्न को जोड़ देने से जीवितसहम की सिद्धि हो जाती है। अम्बु सहम के साधन में मातृसहम के समान ही सब क्रिया करनी होती है ॥ ११ ॥

अथ कर्मरोगमन्मथसहमानयनमाह--

**कर्मज्ञमारान्निशि वाममुक्तं रोगाख्यमिन्दुं तनुतः सदैव।**
**स्यान्मन्मथो लग्नपमिन्दुतोऽह्नि वामं निशीन्दुं तनुपं सदाऽर्कात् ॥१२॥**

कर्मज्ञमिति। दिवा भौममध्ये बुधः शोध्यः, निशि रात्रौ वामं बुधमध्ये भौमः लग्नयोगः शोध्यः सैकता च कार्या तत्कर्मसहमं स्यात्। सदैव दिवारात्रौ च तनुतः लग्नमध्ये चन्द्रः शोध्यः लग्नयोगः सैकता च कार्या तद्रोगसहमं स्यात्। दिवसे चन्द्रमध्ये लग्नस्वामी शोध्यः वामं निशि लग्नस्वामिमध्ये चन्द्रः शोध्यः लग्नयोगः सैकता च कार्या तन्मन्मथो मदनस्तस्य सहमं स्यात् इन्दुतनुपं लग्नस्वामी चन्द्रश्चेत्तदाऽहोरात्रमर्काल्लग्नस्वामी चन्द्रः शोध्यः लग्नयोगः सैकता च कार्या मन्मथसहमं स्यात्।

उदाहरणम्--भौममध्ये बुधे शोधिते शेषे ० । २ । १६ । २८ लग्नयुतं सैकं जातं कर्मसहममं १ । २० । २० । २२ लग्नमध्ये चन्द्रे शोधिते शेषं ६ । २५ । ५४ । ७ लग्नयुतं जातं रोगसहमम् ७ । १३ । ५८ । १ चन्द्रमध्ये लग्नस्वामिनि भौमे शोधिते शेषं ९ । ७ । ३७ । १ लग्नयुतं जातं मदनसहमम् ९ । २५ । ४१ । ५ ॥१२॥

अब कर्म, रोग और मन्मथसहम के आनयन का प्रकार बताते हुए कहते हैं--दिन के समय वर्षप्रवेश होने से मंगल में बुध को घटावें और रात्रि के समय वर्षप्रवेश होने पर बुध में मंगल को घटाकर लग्न जोड़ने और सैकता करने से रोग सहम का साधन हो जाता है। मदनसहम साधन करने के लिए दिवावर्षप्रवेश होने पर चन्द्रमा में लग्नेश को घटावे तथा रात्रि वर्षप्रवेश में लग्नेश में चन्द्रमा को घटाने और लग्न जोड़ने तथा सैकता करने से मदनसहम की सिद्धि हो जाती है ॥ १२ ॥

अथ कलिक्षमाशास्त्रसहमानामानयनमाह --

**कलिक्षमे स्तो गुरुतो विशुद्धे कुजे विलोमं निशि पूर्वरीत्या।**
**शास्त्रं दिने सौरिमपास्य जीवेद्वामं निशि ज्ञस्य युतिः पुरावत् ॥१३॥**

कलिक्षमे इति। दिवा गुरुमध्ये भौमः शोध्यः पूर्वरीत्येति लग्नयोगः सैकता च कार्या तत्कलिसहमं क्षमासहमं च भवतः। दिने गुरुमध्ये शनिः शोध्यः रात्रौ शनिमध्ये गुरुः शोध्यः ज्ञस्य युतिः बुधयोगः कार्यः पुरावदिति शोध्यर्क्षशुद्ध्याश्रयभान्तराले बुधो न चेत्तदा सैकता च कार्या। तच्छास्त्रसहमं स्यात्।

उदाहरणम्--गुरुमध्ये भौमे शोधिते शेषम् ०। १५। २। ३७। लग्नयुतं सैकं जातं कलिसहमम् २। ३। ६। ३१ क्षमासहमं च २। ३। ३। ३१ गुरुमध्ये शनौ शोधिते शेषम्। २। २२। ४८। १६। बुधयुतं जातं शास्त्रसहमम्। ११। ५। ४। २७ ॥१३॥

**अब कलि, क्षमा और शास्त्रसहम साधन करने की रीति बताते हैं—यदि दिवा वर्षप्रवेश हो तो बृहस्पति में मंगल को और रात्रिप्रवेश में मंगल में बृहस्पति को घटाने और लग्न को जोड़ने तथा सैकता करने पर कलिसहम और क्षमासहम की सिद्धि होती है। इसी प्रकार दिवा वर्षप्रवेश में गुरु में शनि को घटाने एवं रात्रि वर्षप्रवेश होने पर शनि में बृहस्पति को घटाने और लग्न जोड़ने तथा सैकता करने पर शास्त्रसहम की सिद्धि हो जाती है ॥१३॥**

अथ बन्धुबन्दकमृत्युसहमानामानयनमाह—

**दिवानिशं ज्ञाच्छशिनं विशोध्य बन्ध्वाख्यमेतन्निशि बन्दकं स्यात्।**
**वामं दिवैतन्मृतिरष्टमर्क्षादिन्दुं विशोध्योक्तवदार्कियोगात् ॥१४॥**

दिवानिशमिति। दिवा रात्रौ वर्षप्रवेशे सति बुधमध्ये चन्द्रः शोध्यः लग्नयोगः सैकता च कार्या। तद्बन्धुसहमं स्यात्। निशि वर्षप्रवेशश्चेदेतद्बन्धुसहमं बन्दकसहमं स्यात्। दिवा वामम् विपरीतं चन्द्रमध्ये बुधः शोध्यः लग्नयोगः सैकता च कार्या तदा बन्दकं स्यात्। दिवारात्रौ वर्षप्रवेशे सति अष्टमर्क्षादष्टमभावमध्ये चन्द्रः शोध्यः शनिर्योज्यः उक्तवत्सैकता च कार्या मृतिसहमं स्यात्।

उदाहरणम्—बुधमध्ये चन्द्रे शोधिते शेषम् २। २०। ६। २१ लग्नयुतं सैकं जातं बन्धुसहमम् ४। ८। १०। १५। चन्द्रमध्ये बुधे शोधिते शेषं ९। ९। ५३। ३९ लग्नयुतं जातं बन्दकसहमम् ९। २७। ५७। ३३। अष्टमभावमध्ये ७। १३। ४९। ३०। चन्द्रे शोधिते शेषम् १। २१। ३९। ४३ शनियुतं जातं मृत्युसहमम् ७। २८। २६। ३७ ॥१४॥

**अब बन्धु, बन्दक तथा मृत्युसहम साधने की रीति बताते हुए कहते हैं—दिन या रात्रि किसी भी समय वर्षप्रवेश होने पर बुध में चन्द्रमा को घटा दे**

और लग्न जोड़कर सैकता करके बन्धुसहम का साधन करना चाहिये। यदि रात्रि को वर्षप्रवेश हुआ रहता है तो पूर्वोक्त बंधुसहम ही बन्दकसहम हो जाता है। यदि दिन में वर्षप्रवेश हो तो चन्द्रमा में बुध को घटाने, लग्न को जोड़ने और सैंकता करने से बंदकसहम की सिद्धि होती है। इसी तरह दिवा वर्षप्रवेश होने पर अष्टमभाव में चन्द्रमा को घटा दे और शनि को जोड़ और उक्तरीति से सैकता कर दे तो मृतिसहम की सिद्धि हो जाती है॥ १४॥

अथ देशान्तरार्थसहमयोरानयनमाह-

**देशान्तराख्यं नवमाद्विशोध्य धर्मेश्वरं सन्ततमुक्तवत्स्यात्।**
**अहर्निशं वित्तपमर्थभावाद्विशोध्य पूर्वोक्तवदर्थसद्म॥१५॥**

देशान्तरेति। सततं दिवारात्रौ वर्षप्रवेशे सति नवमान्नवमभावमध्ये धर्मेश्वरम् नवमभावस्वामिनं विशोध्य उक्तवल्लग्नयोगः सैकता च कार्या तद्देशान्तरसहमं स्यात्। अहर्निशं दिवारात्रौ वर्षप्रवेशे सति अर्थभावाद्धनभावाद्वित्तपं धनस्वामिनं विशोध्य पूर्वोक्तवल्लग्नयोगः सैकता च कार्या अर्थसहमं स्यात्।

उदाहरणम्-नवमभावमध्ये ८।९।२६।१८। नवमभावस्वामिनं गुरुं ८।२९।३०।१३। विशोध्य शेषं ११।९।५१।२५। लग्नयुतं जातं देशान्तरसहमं शुक्रं विशोध्य शेषं ५।१९।१७।४२। लग्नयुतं द्रव्यसहमम् ६।७।२१।३६॥१५॥

अब देशान्तर और अर्थसहम साधन करने की रीति बताते हुए कहते हैं-- दिन या रात्रि किसी समय वर्षप्रवेश हो तो नवम भाव में नवमभाव के स्वामी को घटा दे और लग्नयोग और सैकता कर दे तो देशान्तरसहम सिद्ध हो जाता है। अर्थसहम के लिए दिन या रात किसी भी समय वर्षप्रवेश हो तो द्वितीय भाव के स्वामी को घटा दे। फिर उसमें लग्न को जोड़े और पूर्वोक्त रीति से सैकता कर दे तो अर्थसहम सिद्ध हो जाता है॥ १५॥

अथ परदारान्यकर्मवणिक्सहमानामानयनमाह-

**सितादपास्यार्कमथान्यदाराह्वयं सदा प्राग्वदथान्यकर्म।**
**चन्द्राच्छनिं नामशो निशायां शश्वद्वणिज्यं दिनबन्दकोक्त्या॥१६॥**

सितापदास्यार्कमिति । सदाहोरात्रं शुक्रमध्ये सूर्यः शोध्यः प्राग्वदिति लग्नयोगः सैकता च कार्या अन्यदाराह्वयं सहमं स्यात् । अथ दिवसे चन्द्रमध्ये शनिं विशोध्य वामं निशायां शनिमध्ये चन्द्रः विशोध्यः लग्नयोगः सैकता च कार्या अन्यकर्मसहमं स्यात । शश्वद्दिवारात्रौ दिने बन्दकसहममित्युक्तया रीत्या साध्यं तद्वणिक्सहमं स्यात् । तद्यथा दिवा-रात्रौ वर्षप्रवेशे सति चन्द्रमध्ये बुधः शोध्यः लग्नयोगः सैकता च कार्या वणिक्सहमं स्यात् ।

उदाहरणम्--शुक्रमध्ये सूर्ये शोधिते शेषम् १० । १७ । १ । ४ । लग्नयुतं जातं परस्त्रीसहमम् ११ । ५ । ५ । ३६ चन्द्रमध्ये शनौ शोधित शेषम् ११ । १५ । २२ । ५३ । लग्नयुतं जातमन्यकर्मसहमम् ० । ३ । २६ । ४७ । चन्द्रमध्ये बुधे शोधिते शेषम् ९ । ९ । ५३ । ३९ लग्नयुतं जातं वणिक्स-हमम् ९ । २७ । ५७ । ३३ ॥ १६ ॥

अब परदारासहम साधने की रीति बताते हुए कहते हैं—दिन या रात्रि किसी भी समय वर्षप्रवेश हो तो शुक्र में सूर्य को घटावे और उसमें लग्न जोड़े और सैकता करे तो परदारासहम सिद्ध हो जाता है । अन्य कर्मसहम साधन करने के लिए—यदि दिन में वर्षप्रवेश हो तो चन्द्रमा में शनि को और रात्रि में वर्षप्रवेश हो तो शनि में चन्द्रमा को घटाकर लग्न जोड़े और सैकता करे तो अन्यकर्मसहम सिद्ध हो जाता है । दिन या रात्रि किसी भी समय वर्षप्रवेश हो तो पूर्वोक्त दिवा बन्दक सहम के समान ही साधन करने पर वणिक् सहम की सिद्धि हो जाती ॥ १६ ॥

अथ कार्यसिद्धिविवाहसहमयोरानयनमाह--

**शनेर्दिवार्कं निशि चन्द्रमार्केर्विशोध्य सूर्येन्दुभनाथयोगात् ।**
**स्यात्कार्यसिद्धिः सततं विशोध्य मन्दं सितात्स्याच्तु विवाहसद्म ॥१७॥**

शनेरिति । दिवसे शनिमध्येऽर्कं विशोध्य सूर्यराशिस्वामी योज्यः रात्रौ शनिमध्ये चन्द्रः शोध्यः चन्द्रराशिस्वामी ग्रहो योज्यः सैकता च कार्या तत्कार्यसिद्धिसहमं स्यात् । सततं दिवारात्रौ वर्षप्रवेशे सति शुक्रमध्ये शनिः शोध्यः सैकता च कार्या तद्विवाहसहमं स्यात् ।

उदाहरणम्--शनिमध्ये सूर्ये शोधिते शेषं ८ । २९ । १६ । ४८ सूर्य-राशिस्वामी शनिना युतं जातं कार्यसिद्धिसहमं ३ । ६ । ३ । ४२

शुक्रमध्ये शनौ शोधिते शेषं १।१७।४४।४५ लग्नयुतं सैकं जातं विवाहसहमम् ३।५।४८।४८ ॥१७॥

अब कार्यसिद्धि और विवाहसमय साधन करने की रीति बताते हुए कहते हैं—यदि दिन में वर्षप्रवेश हो तो शनि में सूर्य को घटाकर उसमें सूर्य की राशि के स्वामी को जोड़ दे और रात्रि को वर्षप्रवेश हो तो शनि में चन्द्रमा को घटावे और चन्द्रमा की राशि के स्वामी को जोड़ दे और सैकता करे तो कार्यसिद्धिसहम की सिद्धि हो जाती है। इसी प्रकार दिन चाहे रात किसी भी समय वर्ष प्रवेश हो तो शुक्र में शनि को घटाकर लग्न को जोड़े और सैकता करे तो विवाहसहम सिद्ध हो जाता है ॥ १७ ॥

अथ प्रसवसन्तापसहमयोरानयनमाह--

**गुरोर्बुधं प्रोज्झ्य भवेत्प्रसूतिर्वामं निशीन्दुं शनितो विशोध्य ।**
**षष्ठं क्षिपेदुक्तदिशा सदैव सन्तापसञ्ज्ञाऽरमपास्य शुक्रात् ॥१८॥**

गुरोरिति। दिवसे गुरुमध्ये बुधः शोध्यः निशि वामं बुधमध्ये गुरुः शोध्यः लग्नयोगः संकता च कार्या तत्प्रसूतिसहमं स्यात्। सदैव दिवारात्रौ शनिमध्ये चन्द्रः शोध्यः षष्ठं क्षिपेत्। षष्ठभावो योज्यः उक्तदिशा सैकता कार्या तत्सन्तापसहमं स्यात्। आरमपास्य शुक्रादित्य-ग्रिमश्लोकेन सम्बन्धः।

उदाहरणम—गुरुमध्ये बुधे शोधिते शेषम् ०।१७।९।५ लग्नयुते सैकं जातं प्रसूतिसहमम् २।५।२२।५९। शनिमध्ये चन्द्रे शोधिते शेषं ०।१४।३७।७ रिपुभावेन ५।१३।४५।१६ युतं सैकं जातं सन्तापसहमम्।६।२८।२०।२६ ॥१८॥

अब प्रसव और सन्तापसहम साधने की रीति बताते हुए कहते हैं—दिन में वर्षप्रवेश हो तो बृहस्पति में बुध को घटावे और यदि रात्रि में वर्षप्रवेश हो तो बुध में गुरु को घटाकर लग्न जोड़े और पूर्ववत् सैकता करे तो प्रसूतिसहम सिद्ध हो जाता है। दिन तथा रात्रि किसी भी समय वर्षप्रवेश हो तो शनि में चन्द्रमा को घटावे और उसमें षष्ठ भाव को जोड़कर पूर्ववत् सैकता कर देने से सन्तापसहम की सिद्धि हो जाती है ॥ १८ ॥

अथ श्रद्धाप्रीतिबलदेहसहमानामानयनमाह--

**श्रद्धा सदा प्रोक्तदिशाऽथ पुण्यं विद्याख्यतः प्रोज्झतसदापुरोक्त्या ।**
**प्रीत्याख्यमुक्तं बलदेहसंज्ञे पराः समे आद्यमपास्य भौमात् ॥१९॥**

श्रद्धेति। सदाहोरात्रं शुक्रमध्ये आरं भौमं विशोध्य। प्रोक्तदिशा लग्नयोगः सैकता च कार्या तच्छ्रद्धासहमं स्यात्। सदा दिवारात्रौ विद्यासहममध्ये पुण्यसहमं विशोध्य पुरोक्त्या लग्नयोगः सैकता च कार्या तत्प्रीतिसहमं स्यात्। अथ पूर्वं यद्यशः सहममुक्तं तदेव बलदेहसंज्ञं सहमद्वयं तत्र बलं सैन्यं न तु सामर्थ्यं तस्य पूर्वं कथितत्वात्। देहः शरीरम्। जाड्यमपास्य भौमादित्यग्रिमश्लोकेन सम्बन्धः।

उदाहरणम्--शुक्रमध्ये भौमे शोधिते शेषं ११।९।५९।१२ लग्नयुतं जातं श्रद्धासहमं ११।२८।३।६ विद्यासहममध्ये पुण्यसहमे शोधिते शेषं ८।०।४१।३८ लग्नयुतं जातं प्रीतिसहमं ८।१८।४४।३८ पूर्वोक्तं यशः सहमं तदेव बलसहमं।०।४।५५।३ देहसहमं च ०। १४।५५।३२॥१९॥

अब श्रद्धा, प्रीति, बल और देहसहम को साधने की रीति बताते हुए कहते हैं—दिन या रात किसी भी समय वर्षप्रवेश हो तो शुक्र में मंगल को घटा कर लग्न जोड़े और पूर्ववत् सैकता करे श्रद्धासहम का साधन हो जाता है। दिन या रात किसी समय भी वर्षप्रवेश हो तो विद्यासहम में पुण्यसहम को घटा दे और लग्न का योग करे और पूर्ववत् सैकता कर दे तो प्रीतिसहम सिद्ध हो जाता है। पहले जो यशसहम कह आये हैं, उसी को बल और देहसहम समझना चाहिए॥ १९॥

अथ जाड्यव्यापारपानीयपातसहमानामानयनमाह—

**शनिं विलोमं निशि चान्द्रियोगाद्व्यापारमाराज्ज्ञमपास्य शश्वत्।**
**पानीयपातः शशिनं विशोध्य सौरेर्विलोमं निशि पूर्ववत्स्यात्॥२०॥**

शनिरिति। दिवसे भौममध्ये शनिः शोध्यः चन्द्रे बुधस्य योगः विलोमं निशि शनिमध्ये भौमः शोध्यः बुधो योज्यः सैकता च कार्या जाड्यसहमं स्यात्। शश्वद्दिवारात्रौ भौममध्ये बुधः शोध्यः लग्नयोगः सैकता च कार्या तद्व्यापारसहमं स्यात्। दिवा शनिमध्ये चन्द्रः शोध्यः रात्रौ चन्द्रमध्ये शनिः शोध्यः पूर्ववत्स्यादिति लग्नयोगः सैकता च कार्या तत्पानीयपातसहमं स्यात्।

उदाहरणम्—भौममध्ये शनौ शोधिते शेषम् २।७।४५।४२। बुधयुतं जातं जाड्यसहमं १०।२०।३०।५० भौममध्ये बुधे शोधिते शेषं ०।२।१६।२८ लग्नयुतं सैकं जातं व्यापारसहमम् १।२०। २०। २२ शनिमध्ये चन्द्रे शोधिते शेषं ०।१४।३७।७ लग्नयुतं सैकं

जातं पानीयपातसहमम् २। २। ४१। १ ॥२०॥

अब जाड्य व्यापार और पानीयपतन सहम साधन करने की रीति बताते हुए कहते हैं दिन में वर्षप्रवेश हो तो मंगल में शनि को घटावे और बुध को जोड़े। रात्रि में वर्षप्रवेश हो तो शनि में मंगल को घटावे और बुध को जोड़े और पूर्ववत् सैकता करे तो जाड्यसहम का साधन हो जाता है। दिन रात्रि किसी समय वर्षप्रवेश हो तो मंगल में बुध को घटाकर लग्न जोड़ने और सैकता करने से व्यापारसहम का साधन हो जाता है। पानीयपतन सहम साधने के लिए दिन में वर्षप्रवेश हो तो मंगल में शनि को घटाकर बुध को जोड़े और रात्रि को वर्षप्रवेश हो तो चन्द्रमा में शनि को घटाकर लग्न जोड़े और पूर्ववत् सैकता करे तो पानीयपतनसहम सिद्ध हो जाता है ॥ २० ॥

अथ शत्रुशौर्योपायसहमानामानयनमाह —

**मन्दं कुजात्प्रोज्झ्य रिपुर्विलोमं रात्रौ भवेद्भौमविहीनपुण्यात् ।**
**शौर्यं विलोमं निशि पूर्ववत्स्यादुपाय इज्यं शनितो विशोध्य ॥२१॥**

मन्दमिति। दिवसे भौममध्ये शनिः शोध्यः रात्रौ विलोमं शनिमध्ये भौमः शोध्यः लग्नयोगः सैकता च कार्या तद्रिपुसहमं स्यात्। दिवसे पुण्यसहममध्ये भौमः शोध्यः रात्रौ भौममध्ये पुण्यसहमं शोध्यः पूर्ववत्स्यादिति लग्नयोगः सैकता च कार्या शौर्यसहमं भवति। उपाय इज्यं शनितो विशोध्य इत्यादिमश्लोकेन सम्बन्धः।

उदाहरणम्--भौममध्ये शनौ शोधिते शेषं २। ७। ४५। ४२। लग्नयुतं सैकम् जातं शत्रुसहमम् ३। २५। ४९। ३६। पुण्यसहममध्ये भौमे शोधिते शेषम् ०। १८। १०। ५९ लग्नयुतं सैकं जातं शौर्यसहमम् २। ६। १४। ५३ ॥२१॥

अब शत्रु और शौर्यसहम का साधन करते हुए कहते हैं--दिन में वर्ष प्रवेश हो तो मंगल में शनि को और रात्रि को वर्षप्रवेश हो तो शनि में मंगल को घटावे और लग्न को जोड़े और पूर्ववत् सैकता करे तो रिपुसहम सिद्ध हो जाता है। दिन के समय वर्षप्रवेश हो तो पुण्यसहम में मंगल को घटावे और रात्रि को वर्षप्रवेश हो तो मंगल में पुण्यसहम को घटाकर लग्न जोड़े और पूर्ववत् सैकता करे तो शौर्यसहम की सिद्धि हो जाती है ॥ २१ ॥

अथ दरिद्रगुरुतासहमयोरानयनमाह—

**वामं निशि ज्ञं तु विशोध्य पुण्याज्ज्ञयुग्विलोमं निशि तद्दरिद्रम्।**
**सूर्योच्चतः सूर्यमपास्य नक्तं चन्द्रं तदुच्चाद् गुरुता पुरोक्त्या ॥२२॥**

वाममिति। दिवसे शनिमध्ये इज्यो गुरुः शोध्यः रात्रौ गुरुमध्ये शनिः शोध्यः लग्नयोगः सैकता च कार्या तदुपायसहमं स्यात्। दिवसे पुण्यसहम-मध्ये सुण्यसहमं शोध्यं बुधयुक्तं कार्यं सैकता च कार्या तद्दरिद्रसहमं स्यात्। दिवसे सूर्योच्चमध्ये सूर्यः शोध्यः नक्तं रात्रौ चन्द्रोच्चमध्ये चन्द्रः शोध्यः पुरोक्त्या लग्नयोगः सैकता च कार्या तद्गुरुतासहममं स्यात्।

उदाहरणम्—शनिमध्ये गुरौ शोधिते शेषं ९। ७। ११। ४१ लग्नयुतं सैकं जातमुपायसहमं ९। २५। १५। ३५। पुण्यसहममध्ये बुधे शोधिते शेषम् ०। २०। २७। २७। बुधयुतं जातं दारिद्रचसहमं ९। २। ४३। २५। सूयोच्चमध्ये ०। १०। सूर्ये शोधिते शेषं ३। २। २९। ५४ लग्न-युतं सैकं जातं गुरुतासहमम् ४। २०। ३३। ८ ॥२२॥

अब उपाय, दरिद्र और गुरुतासहम के साधन का प्रकार बताते हुए कहते हैं—दिवावर्षप्रवेश होने पर शनि में बृहस्पति को और रात्रि को वर्षप्रवेश होने पर बृहस्पति में शनि को घटाकर लग्न जोड़ने और सैकता करने से उपायसहम की सिद्धि हो जाती है। दिवावर्षप्रवेश होने पर पुण्यसहम में बुध को घटावे और बुध ही को जोड़ दे, सैकता करे दरिद्रसहम की सिद्धि हो जाती है। दिन के समय वर्षप्रवेश हो तो सूर्य के उच्च में सूर्य को घटावे और रात को चन्द्रमा के उच्च में चन्द्रमा को घटावे और पूर्वोक्त रीति से लग्न का योग और सैकता करे तो गुरुतासहम की सिद्धि हो जाती है॥ २२॥

अथ जलपथबन्धनसहमयोरानयनमाह—

**कर्कार्द्धतः प्रोज्झ्य शनिं स्याज्जलाध्वान्यथा निशि।**
**पुण्याच्छनिं विशोध्याऽह्नि वामं निशि तु बन्धनम् ॥२३॥**

कर्कार्द्धत इति। दिवा कर्कार्द्धतः सार्द्धराशित्रयमध्ये ३। १५। शनिं संशोध्य अन्यथा निशि रात्रौ शनिमध्ये सार्द्धराशित्रयं ३। १५ विशोध्य लग्नयोगः सैकता च कार्या जलाध्वा जलपथसहमं स्यात्। अह्नि दिवसे पुण्यसहममध्ये शनिः शोध्यः रात्रौ शनिमध्ये पुण्यसहमं शोध्यः लग्नयोगः

सैकता च कार्या तद्बन्धनसहमं स्यात् ।

उदाहरणम् –सार्द्धराशित्रयमध्ये ३ । १५ शनौ शोधिते शेषं ६ । ८ । १३ । ६ लग्नयुतं जातं जलपथसहमं ६ । २६ । १७ । ० पुण्यसहममध्ये शनौ शोधिते शेषं २ । २५ । ५६ । ४१ लग्नयुतं सैकं जातं बन्धनसहमम् ४ । १४ । ० । ३५ ॥ २३॥

अब जलपथ और बन्धनसहम के आनयन का प्रकार बताते हुए कहते हैं— दिन में वर्षप्रवेश हो तो कर्कार्ध ( साढ़े तीन राशि ) के बीच में शनि को घटाकर और रात्रि को वर्षप्रवेश हो तो शनि में कर्कार्ध ( साढ़े तीन राशि ) को घटाकर लग्न का योग और सैकता करे तो जलपथसहम का साधन हो जाता है । इसी प्रकार दिन में वर्षप्रवेश हो तो पुण्यसहम में शनि को और रात्रि को वर्षप्रवेश हो तो शनि में पुण्यसहम को घटाकर लग्न का योग और पूर्ववत् सैकता करे तो बन्धनसहम का साधन हो जाता है ॥ २३ ॥

अथ कन्याश्वसहमयोरानयनमाह –

**चन्द्रः सितादपास्योक्तं सदा कन्याख्यमुक्तवत् ।**
**पुण्यादर्कमपास्याय योगादश्वोऽन्यथा निशि ॥२४॥**

चन्द्र इति । सदा दिवा रात्रौ शुक्रमध्ये चन्द्रः शोध्यः उक्तवदिति लग्नयोगः सैकता च कार्या तत्कन्यासहमं स्यात् । दिवसे पुण्यसहममध्ये सूर्यः शोध्यः रात्रौ सूर्यमध्ये पुण्यसहमं शोध्यम् आयभावः एकादशभावो योज्यः सैकता च कार्या तदश्वसहमं स्यात् ।

उदाहरणम्—शुक्रमध्ये चन्द्रे शोधिते शेषं २ । ० । २२ । १ लग्नयुतं सैकं जातं कन्यासहमं ३ । २० । ५ । ५५ पुण्यसहममध्ये सूर्यं शोधिते ज्ञेयम् ११ । २५ । १३ । २९ । एकादशभावेन १० । ९ । २६ । ३८ युतं जातमश्वसहमं १० । ४ । ४० । ७ अस्मिन् सहमद्वये सम्मतिर्नास्ति समरसिंहेनानुक्तत्वात् ।

अस्मिन् संज्ञातन्त्रे शोध्यशोधकयोर्मध्ये लग्नं चेन्न भवति तदा सहमे एको राशिर्योज्यः इत्युक्तमस्ति । तर्हि अत्रार्थे सम्मतिवाक्यं कुत्रापि न लभ्यते । यवनानां मतेऽपि सैकता नास्ति । समरसिंहे 'लग्नद्वितीय-भवनात्' इत्यपि पाठस्तिष्ठति । अस्मिन् पाठे सैकता समायाति अत्र ग्रन्थकर्त्रा लग्नद्वितीयभवनादिति पाठं धृत्वा सहमेषु सैकतोक्ता परन्तु



समरसिंहे तथा यवनताजिके तथा मनुष्यताजिके लग्नाद् द्वितीयभवनादित्येव

पाठोऽस्ति । अस्मिन्पाठे सैकता नास्ति । एवं पुरस्कृत्य सर्वैराचार्यैः सहमेषु संकता नोक्ता । अत्रोदाहरणम्—यदाह समरसिंहः "दिवसे दिनपतिभोग्याच्छशिभुक्तानामंशकान्सम्मील्य । अन्तःस्थितराशियुतास्त्रिंशत्प्रत्येकतः कृत्वा ॥१॥ यद्यन्तरराश्यन्तर्न भवति लग्नम् तदाऽस्य भुक्तांशाः । मध्ये क्षेप्या मध्यस्थिते तु भोग्यांशकाः पात्याः ॥२॥ लग्नद्वितीयभवनास्त्रिंशत्प्रत्येकतः शोधिते यत्र । विश्राम्यति तत्रर्क्षे विज्ञेयं पुण्यसहमम् ॥३॥ इति दिवसे वर्षप्रवेशे सति सूर्यस्य राशिं त्यक्त्वा अंशादिकं स्थाप्यम् । अंशास्त्रिंशदंशमध्ये शोध्याः कलादिक षष्टिमध्ये शोध्यमंशादिकं यदवशिष्टं तद्भोग्यं तन्मध्ये चन्द्रराशिं त्यक्त्वा अंशादिकं योज्यं तदनन्तरम् सूर्याधिष्ठितराशेः सकाशादग्रिमो यो राशिस्तस्माद् गणनया यत्संख्याकश्चन्द्राधिष्ठितराशेः सकाशात्पूर्वराशिर्भवति तावत्यः संख्याः पूर्वानीतांशोपरि स्थाप्याः । तदनन्तरम् प्रत्येकतः कृत्वा त्रिंशत्प्रत्येकं प्रत्येकमिति त्रिंशत्प्रत्येकतः राशीनामंशाः कार्याः । अधःस्थांशयुताः तदनन्तरम् सूर्यराशेः सकाशाच्चन्द्रराशियावदनयोर्मध्ये लग्नराशिश्चेन्न भवति तदा लग्नस्य राशिं त्यक्त्वांऽशा योज्याः अनयोर्मध्ये लग्नराशिश्चेद् भवति तदा लग्नस्य भोग्यांशाः शोध्याः तदनन्तरम् यदास्य भुक्तांशा युक्तास्तदा लग्नाद् गणनाक्रमः । यदा लग्नस्य भोग्यांशाः शोधिताः तदा धनभावाद्गणनाक्रमः अनया रीत्या गणनायां प्रति राशौ त्रिंशत्त्रिंशच्छोधिते यस्मिन् राशौ त्रिंशन्न शुध्यति तस्मिन् राशौ पुण्यसहमम् ज्ञेयम् । लग्नद्वितीयभवनादिति पाठे सूर्यचन्द्रयोर्मध्ये लग्नम् न भवति । अथवा भवति तदा धनभवनादेव गणनाक्रमः न तु लग्नात् ।

उदाहरणन्—सूर्यः ९ । ७ । ३० । ६ । चन्द्रः ५ । २२ । ९ । ४७ लग्नं ०। १८ । ३ । ५४ सूर्यस्य भोग्यांशमध्ये २२ । २९ । ५४ चन्द्रस्य भुक्तांशाः २२ । ९ । ४७ युक्ता जाताः ४४ । ३९ । ४१ सूर्यचन्द्रयोरन्तरालराशिभिर्युक्ता जातोऽयमंको राश्यादिः ३ । १४ । ३९ । ४१ अस्यांशाः १०४ । ३९ । ४१ । सूर्यचन्द्रयोर्मध्ये लग्नं नास्ति इति कारणाल्लग्नस्य भुक्तांशैः १८ । ३ । ५४ युक्तजाताः १२२ । ४३ । ३५ लग्नात्त्रिंशत्प्रत्येकतः शोधिते जातं सिंहराशौ पुण्यसहमं ४ । २ । ४२ । ३५ । धनभवनात्त्रिंशत्प्रत्येकतः शोधिते जातं कन्याराशौ पुण्यसहमम् ५ । २ । ४२ । ३२ । अनया रीत्या सैकता समायाति । एवं पाठयोर्विवादः लग्नाद् द्वितीय-

भवनादिति पाठे एतावती युक्तिरस्ति। यदा लग्नस्य भुक्तांशाः युक्तास्तदा लग्नस्य भोग्यमवशिष्टमिति कारणाल्लग्नाद् गणनाक्रमः। तत्र लग्न-सम्बन्धस्तिष्ठति यदा लग्नस्य भोग्यांशाः शोधितास्तदा लग्नसम्बन्धो नास्ति इति कारणाद्धनभवनाद्गणनाक्रमः, अत्र लग्नशेषं किमपि नास्ति एतावती युक्तिरस्ति सर्वग्रन्थेषु सम्मतिरस्ति सम्मतेरभावाल्लग्नद्वितीय-भवनादित्यपि पाठः। तथा चोक्तं मनुष्यजातके--"भोग्यादुक्तममूनि यावदखिलान्यन्तर्भयुक्तान्यतो लग्ने बाह्यगतेऽस्य भुक्तसहितं भोग्योनमन्तः-स्थिते। कृत्वा राशिमपासिते खदहनैर्लग्नाद् द्वितीयाच्च तत्पुण्याद्यानि भवन्ति तत्र सहमान्यंशे विरामो यतः" ॥२४॥

अब कन्या और अश्वसहम साधन करने की रीति बताते हुए कहते हैं --दिन या रात्रि किसी भी समय वर्षप्रवेश हो तो शुक्र में चन्द्रमा को घटावे और लग्न-योग और सैकता करने पर कन्यासहम की सिद्धि हो जाती है। दिन के समय वर्षप्रवेश हो तो पुण्यसहम में सूर्य को घटावे और रात को वर्षप्रवेश हो तो सूर्य में पुण्यसहम को घटावे और इसमें एकादश भाव जोड़े और पूर्ववत् सैकता कर दे तो अश्वसहम का साधन हो जाता है ॥ २४ ॥

सहमचक्रम्

| पुण्य १ | गुरु २ | विद्या ३ | यश ४ | मित्र ५ | माहा ६ | आशा ७ | साम ८ | भ्राता ९ | गौरव १० | राज ११ | तात १२ | माता १३ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| ६ | ५ | ५ | ० | ३ | २ | ११ | २ | ४ | १ | ६ | ९ | १० |
| २ | ३ | ३ | १४ | २५ | ६ | ० | ३ | १० | १४ | ७ | ७ | १५ |
| ४३ | २४ | २४ | ५५ | १२ | १४ | १६ | ६ | ५२ | ५५ | १२ | २२ | ४१ |
| ३५ | १३ | १३ | ३३ | २६ | ५३ | ० | ३१ | १३ | ३२ | ४२ | ४२ | ५३ |
| **सुत १४** | **जीव १५** | **अम्बु १६** | **कर्म १७** | **रोग १८** | **मद १९** | **कला २०** | **क्षमा २१** | **शास्त्र २२** | **बन्धु २३** | **वन्दक २४** | **मृत्यु २५** | **दिशा २६** |
| ४ | ६ | १० | १ | ७ | ६ | २ | २ | ११ | ४ | ६ | ९ | ११ |
| २५ | २५ | १५ | २० | १३ | २५ | ३ | ३ | ५ | ८ | २७ | २८ | २७ |
| २९ | १५ | ४१ | १० | ५८ | ४१ | ६ | ६ | ४ | १० | ५० | २६ | ५५ |
| २० | ३५ | ५३ | २२ | १ | ५ | ३१ | ३१ | २७ | १५ | ३३ | ३७ | १९ |

## सहमचक्रम्

| धन | अन्य स्त्री | अ.क | वणि | का | विवाह | प्रसूति | सन्ताप | श्रद्धा | प्रीति | बलसं. | दह |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २७ | २८ | २९ | ३० | ३१ | ३२ | ३३ | ३४ | ३५ | ३६ | ३७ | ३८ |
| ६ | ११ | ७ | ९ | ३ | ३ | ३ | ६ | ११ | ८ | ० | ० |
| ७ | ५ | ३ | २७ | ६ | ५ | ५ | ८ | २८ | ८ | १४ | १४ |
| २१ | ५ | ६ | ५७ | ३ | ४८ | २२ | २३ | ३ | ४४ | ५५ | ५५ |
| ३६ | २६ | ४७ | ३० | ४२ | ४८ | ५९ | २३ | ६ | ३२ | ३१ | ३२ |
| जाड्य | व्यापार | पानाय | शत्रु | शाय | उपाय | दरिद्र | गुरुता | जल | बध | कन्या | अश्व |
| ३९ | ४० | ४१ | ४२ | ४३ | ४४ | ४५ | ४६ | ४७ | ४८ | ४९ | ५० |
| १० | २ | २ | ३ | २ | ९ | १० | ४ | ९ | १४ | ३ | ० |
| २० | २ | २ | २५ | ६ | २५ | २० | २० | २६ | १४ | २० | ३४ |
| १ | ४१ | ४१ | ४९ | १४ | १५ | ४३ | ३३ | २७ | २० | २५ | ४० |
| ५० | २० | ४२ | ६ | ५३ | ३५ | ४५ | ४८ | २० | ३५ | ५५ | ५० |

अथ सहमोत्पत्तिमभिधाय तत्फलान्यभिधास्यमानो वर्षप्रवेशात्कतिदिवसैः सहमफलावाप्तिः स्यादित्याकांक्षां परिहरंस्तत्प्राप्तिवसानयनमाह——

**स्वनाथहीनं सहमं तदंशाः स्वीयोदयघ्ना विहृतास्त्रिशत्या ।**
**तत्सद्मपाको दिवसैर्हि लब्धैः स्यात्तद्दशायां तदसम्भवे वा ॥२५॥**

स्वनाथहीनमिति । यस्य सहमस्य शुभाऽशुभफलावाप्तिदिवसा ज्ञातुमिष्टास्तत्सहमराश्यादिके कर्मभूमौ स्थाप्यम् । स्वनाथेन स्वीयस्वामिना ग्रहणं हीनमूनं कार्यमवशिष्टस्यांशाः कार्यास्ते तत्सहमाक्रान्तराशिस्वीयोदयेन त्रिनिघ्नाः त्रिशत्या शतत्रयेण विहृता भक्ता यल्लब्धा दिवसास्तैः कृत्वा तेषां सद्मनामसहमानां पाकः फलपाककालः स्यात् । अज्ञागतैर्दिवसैः त्रिशद्भक्तैः वर्षप्रवेशकालिको राश्यादिः स्पष्टसूर्ययुक्तस्तावति सूर्ये भुक्ते सति तत्सहमस्य फलपाककालो भवतीति । केचित्तु सहमेश्वरमहादशाप्रवृत्तिदिनादेव तावद्भिरानीतैर्दिवसैस्तद्दशायामन्यदशायां वा फलपाक इति । ननु सहमसहमेश्वरयोर्यदा राश्यादिसाम्यं स्यात्तदान्तराभावादेव तत्सहमदिवसलब्धौ कथं सहमफलादिज्ञानं न स्यादित्यत आह-तद्दशायामिति । सत्यं तदसम्भवे वा अन्तराभावाद्दिवसाप्राप्तौ सत्यां तत्सहमनाथदशायामेव सहमफलप्राप्तिः स्यात् । तत्रापि सूक्ष्मकालज्ञानवत्त्वं तदंशायां वा विदशायाम् वा स्यादिति निष्कर्षः ।

उदाहरणम्-पुण्यसहमम् ५ । ५ । २५ । १ स्वस्वामिना बुधेन ३ । ६ । १४ । १२ हीनं शिष्टम् १ । २६ । १० । ४६ अस्यांशाः ५६ । १६ । ४६ कन्यास्थसहममिति कन्यादयेन ३३५ गुणितं जातं १६८२५ । २३ । ३५ त्रिशत्या ३०० भक्तं लब्धा दिवसाः ६६ घटयः ५ पलानि ४ वर्षप्रवेश-दिवसादेतावत्सु दिनेष्वतीतेषु पुण्यसहमफलपाकः । अथवा पुण्यसहमाधीश-बुधमहादशायां बहुदिनत्वं त्वां बुधमहादशाप्रवेशदिनादेतावत्सु दिनेष्वतीतेषु पुण्यसहमफलपाकः यद्यल्पदिनत्वं वा यदा वा सहमेश्वरः ॥२५॥

सहम साधने की रीतियाँ बताने के बाद अब उनका फल कहने का उपक्रम बाँधते हुए कहते हैं—वर्षप्रवेश के कुछ ही दिनों बाद सहम का फल मिलने लगता है। इस आकांक्षा का परिहार करते हुए फलप्राप्ति के दिनों का आनयन करने की रीति बताना आवश्यक है। जिस सहम के शुभाशुभ दिवस जानने की इच्छा हो, उस सहम के राशिस्वामी को सहम में घटावे। जो अंश शेष बचे, उनमें सहम राशि के उदयांश से गुणा करे। फिर उनमें तीन सौ से भाग दे। जो शेष बचे, वही सहमफल की दिनसंख्या होती है।

उदाहरण—जैसे पुण्यसहम की राश्यादि ५ । ५ । २५ । १ में सहमराशि के स्वामी बुध ३ । ६ । १ । १२ को घटाया तो शेष रहा १ । २६ । १० । ४६ इसके अंश ५९ । १० । ४९ को सहमराशि कन्या के उदय ३३५ से गुणा किया तो १९८२५ । २३ । ३५ हुए। इनमें ३०० का भाग दिया तो ६६ दिन ५ घटी का लाभ हुआ। जिसका तात्पर्य यह हुआ कि वर्षप्रवेश से इतने दिनों तक में पुण्यसहम का फल होगा ॥ २५ ॥

अथ सहमानां फलानि व्याख्यायन्ते—

**स्वोच्चादिसत्पदगतो यदि लग्नदर्शी**
**वीर्यान्वितः सहमपो यदि नेक्षतेऽङ्गम् ।**
**नाऽसौ बली रविशशिश्रितमेशदर्श-**
**पूर्णान्तलग्नपबलस्य विचारणेत्थम् ॥२६॥**

स्वोच्चादीति । सहमपः सहमराशिस्वामी स्वोच्चादिस्वगृहे स्वोच्च-स्वहद्दास्वत्रैराशिकस्वमुसल्लह एतत्स्थानस्थः सन् अथवा सत्पदगतः शुभस्थानस्थः सन् उपलक्षणत्वान्मित्रगृहगतः सुहृत्सौम्यदृष्टो युतो वा यदि लग्नदर्शी लग्नं पश्यति तदा वीर्यान्वितः वीर्येण बलेनान्वितो युक्तः

बलीत्यर्थः । सहमस्वामी स्वोच्चादिसत्पदगतः सन् यदि अङ्गं लग्नं नेक्षते न पश्यति तदा असौ बली न भवति निर्बल इत्यर्थः । रविशशीति । रविशशिभ्यामाश्रिते ये ये राशितयोः राश्योः ईशौ स्वामिनौ तद्यथा । जन्मकाले सूर्यो यस्मिन् राशावस्ति तद्राशिस्वामी तथा जन्मकाले सूर्यो यस्मिन् राशावस्ति तद्राशिस्वामी । जन्मकालादतीतागतामावास्या यावद्घटीपरिमिताऽस्ति तस्मिन्काले तात्कालिकसूर्यात् लग्नं साध्यं तत्स्वामी । तथा जन्मकालातीतपूर्णान्तलग्नस्वामी । एतेषां चतुर्णां बलस्यैव विचारः हिल्लाजे आयुर्दायानयने तथा मनुष्यजातके आयुर्दायानयने एतेषां बलविचारस्योपयोगः प्रकृते अत्र प्रयोजनाभावेऽपि प्रसङ्गादुक्तम् ।।२६।।

अब सहमों की सबलता और निर्बलता का निर्देश करते हुए कहते हैं — यदि सहमराशि का स्वामी अपने उच्च, स्वगृह, स्वोच्च, स्वहद्दा और स्वमुसल्लह ( स्वनवांश ) में रहता हुआ लग्न को देखता हो तो वह बलवान् माना जायेगा । यदि सहमस्वामी पंचवर्गी में रहकर भी लग्न को न देखता हो तो उसे बलवान् नहीं कह सकेंगे । जन्म-समय में सूर्य और चन्द्रमा जिस-जिस राशि पर बैठे हों उस-उस राशि के स्वामी और जन्मकाल से आगे या पीछे जितनी घटी अमावास्या तथा पूर्णिमा हो, उस समय लग्न बनाने पर जो-जो लग्न आवें, उन-उन लग्नों के स्वामी इन चारों के बल का विचार पूर्वोक्त रीति से ही करनी चाहिए ।। २६ ।।

अथ निर्बलसबलत्वलक्षणमाह--

**पञ्चवर्गीबलेनोनो न हर्षस्थानमाश्रितः ।**
**अबलोऽयं लग्नदर्शी बली स्वल्पेऽस्ति चेत्पदे ॥२७॥**

पञ्चवर्गीति । पञ्चवर्गीबलं प्रागुक्तं तेन ऊनः शरोनो हीनबल इत्युक्तः । नन्दत्रिषडित्यादि चत्वारि हर्षस्थानानि प्रागुक्तानि । तन्मध्ये एकमपि हर्षस्थानं नाश्रितः । तदा अयं ग्रहः अबलः निर्बलो ज्ञेयः । चेत् लग्नदर्शीस्वल्पे पदेऽस्ति तदा बली । तद्यथा--स्वगृहस्वोच्चस्थाने ग्रहे सति महाधिकारः । स्वहद्दायां ग्रहे सति मध्यमोऽधिकारः । स्वत्रैराशिके स्वमुसल्लहे ग्रहे सति स्वल्पोऽधिकारः । अत एव प्राज्ञैर्बलतारतम्यमुक्तम्– "त्रिंशत्स्वभे विंशतिरात्मतुङ्गे" इत्यादि । पदं स्थानमेवं स्वल्पेऽपि पदे त्रैराशिकमुसल्लहाख्ये स्थाने स्थितः सन् लग्नं पश्यति । तदा बली ग्रहो ज्ञेयः ।।२७।।

अब सहमों की निर्बलता और सबलता का लक्षण कहते हुए कहते हैं--पूर्वोक्त पंचवर्गी बल से हीन चारों हर्षद स्थानों से पृथक् हो उसे निर्बल ग्रह कहते हैं। जो ग्रह स्वल्प अधिकार अर्थात् अपने त्रैराशिक और अपने मुसल्लह में रहकर लग्न को देखता हो, उसे बलवान् ग्रह कहेंगे। स्वगृह और स्वोच्च स्थान में स्थित ग्रह महाधिकारी, अपनी हद्दा में स्थित ग्रह मध्यमाधिकारी और अपने त्रैराशिक एवं अपने मुसल्लह में स्थित ग्रह स्वल्पाधिकारी माने जाते हैं ॥२७॥

एवं सहमाधिपस्य बलाऽबलं ज्ञात्वेदानीं सहमस्य वृद्धिह्रासावाह—

**स्वस्वामिना शुभखगैः सहितं च दृष्टं**
**स्वामी बली च यदि तत्सहमस्य वृद्धिः।**
**यत्स्वामिना शुभखगैश्च न युक्तदृष्टं**
**तत्सम्भवो नहि भवेदिति चिन्त्यमादौ ॥२८॥**

स्वस्वामिनेति। यत्सहमं स्वस्वामिना सहितं दृष्टं वा अथवा शुभग्रहैः सहितं दृष्टं वा भवति। यदि प्रागुक्तप्रकारेण सहमस्वामी बली स्यात्। तदा तत्सहमस्य वृद्धिः फलदातृत्वसामर्थ्यं स्यात् यत्सहमं चेत्। स्वामिना अथवा शुभग्रहैर्न युक्तं न दृष्टं तथा तत्सहमस्य न सम्भवः फलदातृत्वसामर्थ्यं न भवेत् नामसदृशं फलं न ददातीत्यर्थः। इत्यादौ प्रथमतश्चिन्त्यं विचार्यम् ॥२८॥

सहमाधिपतियों के बलाबल की विवेचना के अनन्तर अब सहमों की वृद्धि और ह्रासता का निर्देशन करते हुए कहते हैं—जो सहम अपने स्वामी से देखा जाता हो अथवा शुभ ग्रह के साथ हो या उसे शुभ ग्रह देख रहे हों और पूर्वोक्त रीति से जो सहमस्वामी बली हो, वह वृद्धिशील होता और फल प्रदान करने की सामर्थ्य रखता है। जो सहम अपने स्वामी तथा शुभ ग्रहों से न युक्त हो, न देखा गया हो, उस सहम में कुछ भी फल देने की सामर्थ्य नहीं रहती। वह अपने नामानुसार फल नहीं दे पाता। इन बातों का विचार पहले ही कर लेना चाहिए ॥ २८ ॥

अथाऽन्यत्सहमासम्भवलक्षणमाह--

**अष्टमाधिपतिना युतेक्षितं पापदृग्युतमथेत्थशालि तैः।**
**सम्भवेऽपि विलयं प्रयाति तत्तेन जन्मनि पुरेदमीक्ष्यताम् ॥२९॥**

अष्टमेति । यत्सहमं वर्षलग्नादष्टमाधिपतिना अष्टमराशिस्वामिना युतमीक्षितं दृष्टं वा अथवा पापग्रहेण दृष्टं युतं वा अथवा तैरष्टमराशिस्वामिना पापग्रहैर्वा इत्थशालि मुथशिलं करोति तदा स्वस्वामिना शुभखगैः सहितमित्यादि सहमस्य फलप्राप्तिसम्भवेऽपि विलयं नाशं याति । सहमं नामसदृशं फलं न ददातीत्यर्थः । तेन कारणेन जन्मनि जन्मकाले प्रथमतः इदं सहमस्य बलाऽबलमीक्ष्यतां विचार्यताम् ॥२९॥

जो सहम वर्षलग्न से अष्टम राशि के स्वामी से देखा जाता हो या उसके साथ हो अथवा पापग्रहों से युक्त या दृष्ट हो या अष्टम राशि के स्वामी तथा पापग्रहों से परस्पर इत्थशाल करता हो तो वह अपने स्वामी तथा शुभग्रहों द्वारा होने वाले शुभ फलों को असंभव कर देता है। अर्थात् वह सहम अपने नाम के अनुरूप फल नहीं प्रदान कर पाता। इसी कारण जन्मकाल में पूर्वोक्त पचासों सहमों के बलाबल का विचार पहले कर लेना चाहिए ॥ २९ ॥

अथ बलिष्ठसहमस्य साधनं निर्बलस्य निराकरणमित्य आह--

**आदौ जन्मनि सर्वेषां सहमानां बलाबलम् ।**
**विमृश्य सम्भवो येषां तानि वर्षे विचिन्तयेत् ॥३०॥**

आदाविति । आदौ प्रथमतः जन्मनि जन्मकाले सर्वेषां पञ्चाशत्सहमानां बलाबलं विमृश्य ज्ञात्वा येषां फलप्राप्तिसम्भवस्तानि वर्षे विचिन्तयेत् । येषां तु सहमस्वामिनां सर्वप्रकारेण नैर्बल्यं ज्ञातं तानि वर्षे कदापि न विचारयेदित्यर्थः ॥३०॥

अब बलवान् सहम के साधन और निर्बल सहमों के निराकरण का विचार करते हुए कहते हैं--जन्म समय में सबसे पहले सब सहमों का बलाबल विचार करे और जिन सहमों की फलप्राप्ति संभव दिखे, उन्हीं को विचार कर वर्ष में स्थापित करे। जिस सहम का स्वामी बलहीन हो, उसे वर्ष में कभी भी न विचारे ॥ ३० ॥

एवमुक्तप्रकारेण सहमानां सबलत्वे सति फलदातृत्वमुक्तमिदानीं समस्तसहमानां फलानि उच्यन्ते । तत्रादौ पुण्यसहमस्य फलमाह—

**सबले पुण्यसहमे धर्मसिद्धिर्धनागमः ।**
**शुभस्वामीक्षितयुते व्यत्ययं व्यत्ययं विदुः ॥३१॥**

सबल इति। सबले पुण्यसहमे सति शुभग्रहैः स्वामिना च दृष्टे युते सति धर्मस्य सिद्धिर्धनागमः धनप्राप्तिः। व्यत्यये सहमस्य निर्बलत्वे सति पापग्रहदृष्टियुते सति व्यत्ययं धर्मनाशो धननाशश्चेति फलं विदुः वदन्ति ॥३१॥

इस प्रकार वे सहम यदि सबल हों तो क्या फल होगा ? अब इस बात को बिचारते हुए कहते हैं--यदि पुण्य सहम सबल हो और शुभ ग्रह तथा उस राशि के स्वामी उसके साथ हों तथा देख रहे हों तो धार्मिक भावना जागृत हो और धन का आगम हो। यदि पुण्यसहम निर्बल होकर पाप ग्रहों से युक्त या दृष्ट हो तो धर्म और धन दोनों का नाश होता है॥ ३१ ॥

अथास्याशुभफलं सापवादमाह--

**लग्नात्षष्ठाष्टरिःफस्थं धर्मभाग्ययशोहरम्।**
**शुभस्वामिदृशा प्रान्ते सुखधर्मादिसम्भवः ॥३२॥**

लग्नादिति। वर्षलग्नात्षष्ठाष्टमद्वादशस्थानस्थं पुण्यसहमं यदा भवति तदा धर्मभाग्ययशसां नाशकं भवेत्। एतत्स्थानस्थितं सत् शुभग्रहेण स्वामिना वा दृष्टं तदा प्रान्ते वर्षान्ते सुखधर्मादिसम्भवः प्राप्तिः स्यात्। अर्थाद्वर्ष-पूर्वार्द्धे अशुभफलम् ॥३२॥

यदि वर्षलग्न से छठें, आठवें तथा बारहवें स्थान में पुण्य सहम हो तो धर्म, भाग्य तथा यश की हानि होती है। यदि पुण्यसहम छठें, आठवें तथा बारहवें स्थान में स्थित हो, और उस पर शुभ ग्रहों की दृष्टि पड़ रही हो तो सुख और धर्म आदि की प्राप्ति होती है। अर्थात् वर्ष के पूर्वार्ध में अशुभ और उत्तरार्ध में शुभ फल होता है ॥ ३२ ॥

अथ पापशुभग्रहसम्बन्धेन युतिदृष्टयोः फलमाह--

**पापयुक्छुभदृष्टं चेदशुभं प्राक्ततः शुभम्।**
**शुभयुक्तं पापदृष्टमादौ शुभमसत्परे ॥३३॥**

पापयुगिति। तत्पुण्यसहमं पापयुक्तं शुभदृष्टं च चेद् भवति तदा प्राक् पूर्वार्द्धे अशुभं भवेत्। वर्षस्योत्तरार्द्धे शुभं स्यात्। यदा तु पुण्यसहमं शुभयुक्तं पापदृष्टं चेत्तदादौ वर्षपूर्वार्द्धे शुभं स्यात्। परे वर्षस्योत्तरार्द्धे असत् अशुभं स्यात्। यदा तु पापयुक्तं पापदृष्टं चेत्तदा सम्पूर्णं वर्षमशुभं भवेत्।

यदा तु शुभग्रहयुक्तं शुभग्रहदृष्टं चेत्तदा सम्पूर्णवर्षपर्यन्तं शुभफलं भवतीत्यर्थतः सिद्धम् ॥३३॥

अब पापग्रह और शुभ ग्रह के सम्बन्ध से होनेवाले युति और दृष्टि का फल बताते हुए कहते हैं--उक्त पुण्यसहम यदि पापग्रहों से युक्त और शुभ ग्रहों से दृष्ट हो तो वर्ष के पूर्वार्द्ध में अशुभ और उत्तरार्ध में शुभ हो जाता है। यदि पुण्यसहम पापग्रह से युक्त और पापग्रह से दृष्ट हो तो सारा वर्ष अशुभ हो जाता है। यदि पुण्य सहम शुभ ग्रह से युक्त और शुभ ग्रहों से ही दृष्ट हों तो सारा वर्ष शुभ फलदायक होता है ॥ ३३ ॥

अथ पुण्यसहमप्रशंसामाह--

**यत्राब्दे पुण्यसहमं शुभं सोऽत्र शुभावहः ।**
**अनिष्टेऽस्मिञ्छुभो नेति पुण्यमादौ विचारयेत् ॥३४॥**

यत्राब्द इति। यत्राब्दे यस्मिन् वर्षे पुण्यसहमं शुभं शुभफलजनकं सोऽब्दः शुभावहः। तद्वर्षं शुभफलदं ज्ञेयमित्यर्थः। यस्मिन् वर्षे पुण्यसहमे अनिष्टे सति तदा शुभो नेति शुभफलं वर्षमध्ये न ददातीत्यर्थः। अशुभमेव ददातीत्यतः कारणात् पुण्यसहममादौ प्रथमतः विचारयेत् ॥३४॥

अब पुण्य सहम की प्रशंसा करते हुए कहते हैं--जिस वर्ष में पुण्यसहम शुभफलदायक हो वह वर्ष शुभ होता है। जिस वर्ष में पुण्य सहम अनिष्ट होता है तो वह पूरे वर्ष भर अशुभ फलदायक ही होता है। इसी कारण सर्वप्रथम पुण्य सहम का ही विचार करना चाहिए ॥ ३४ ॥

अथ पुण्यसहमस्य जन्मलग्ने त्वनिष्टस्थानस्थितशुभफलमाह--

**सूतौ षष्ठाष्टरिःफस्थे मध्ये पापहतं पुनः ।**
**पुण्यं धर्मार्थसौख्यघ्नं पत्यौ दग्धे फलं तथा ॥३५॥**

सूताविति। सूतौ जन्मसमयलग्ने षष्ठाष्टरिःफस्थे रिःफशब्देन द्वादश-स्थानमेतत्स्थानस्थितं चेत्पुण्यं पुण्यसहमं भवति। अब्दे वर्षे पुनः पापहतं पापयुतं दृष्टं वा तदा धर्मार्थसौख्यानां घातकं भवति ॥३५॥

अब पुण्यसहम के जन्म लग्न में होनेवाले अशुभ लक्षण का प्रतिपादन करते हुए कहते हैं--जन्मकाल में पुण्यसहम यदि छठें, आठवें या बारहवें स्थान में

स्थित हो और उस वर्ष में वह पुण्यसहम पाप ग्रहों से युक्त या दृष्ट हो तो वह धर्म, अर्थ और सौख्य का घातक होता है। यदि पुण्य सहम का स्वामी दग्ध या अस्त हो गया हो तो वह भी धर्म, अर्थ और सुख का नाशक हो जाता है ॥ ३५ ॥

सहमान्यखिलानीत्थं सूतौ वर्षे विचिन्तयेत् ।
मान्द्यारिकलिमृत्यूनां व्यत्ययादादिशेत्फलम् ॥३६॥

सहमानीति । अखिलानि समग्राणि सहमानि इत्थममुना प्रकारेण सूतौ जन्मलग्ने वर्षे च चिन्तयेत् । मान्द्यं रोगः । अरिः शत्रुः । कलिः झकटकः । मृत्युः प्रसिद्धः । अशुभसहमस्योपलक्षणत्वाद्दारिद्र्यं सहममिति । अतएव ग्रन्थकर्ता अग्रे वक्ष्यति । 'दारिद्र्यमृतिमान्द्यारिकलिषूक्तो विपर्यय' इति एषु सहमेषु व्यत्ययात्पुण्यसहमफलाद्विपरीतं फलमादिशेत् । तद्यथा । पुण्यसहमवत् स्वोच्चादिसत्पदगतो यदि लग्नदर्शीत्येतच्छ्लोकमारभ्य 'सूतौ षष्ठाष्टरिःफस्थ' मित्येतावत्पर्यन्तं विचारे क्रियमाणे यदि मान्द्यारि-कलिमृत्यूनां सहमानां शुभफलमागतं तदा अशुभफलं वाच्यम् । यदि त्वशुभफलमागतं तदा शुभफलं वाच्यमित्यर्थः ॥३६॥

इस रीति से जन्मकाल तथा वर्ष काल के सभी सहमों का विचार करना चाहिए। किन्तु रोग, शत्रु, कलि और मृत्युसहम का फल विपरीत क्रम से विचारना चाहिए। कहने का तात्पर्य यह कि ये सहम जितने बलवान् होंगे उतना ही उस सहम फल की हानि करेंगे और जितने निर्बल स्थान में होंगे उतना ही उस सहम की वृद्धि करेंगे ॥ ३६ ॥

अथ कार्यसिद्धिसहमस्य शुभाऽशुभफलमाह--

कार्यसिद्धिसहमं युतं शुभैर्दृष्टमूथशिलगं जयप्रदम् ।
सङ्गरेऽथ शुभपापदृष्टियुक् क्लेशतो जय उदीरितो बुधैः ॥३७॥

कार्यसिद्धीति । कार्यसिद्धिसहमं शुभैः शुभग्रहैर्युतं दृष्टं वा तथा शुभग्रहैर्मुथशिलश्चेत्कृतस्तदा सङ्गरे संग्रामे जयप्रदशत्रुनाशः स्वोत्कर्षश्च भवतीत्यर्थः । अथेत्यनन्तरं तत्कार्यसिद्धिसहमं शुभपापग्रहदृष्टं युक्तं वा तदा क्लेशतोऽत्यायासेन बुधैः पण्डितैर्जय उदीरितः कथितः । सङ्गरे इत्युपलक्षणं विवादादेरपि ॥३७॥



अब कार्यसिद्धिसहम का शुभाशुभ फल बताते हुए कहते हैं—यदि कार्यसिद्धि

सहम शुभ ग्रहों से युक्त और दृष्ट हो और उनके साथ इत्थशाल करता हो तो वह संग्राम में विजयदायक, शत्रुनाशक और उत्कर्षकारी होता है। यदि कार्यसिद्धि सहम शुभ ग्रह अथवा पापग्रह से दृष्ट या युक्त हो तो बड़ी कठिनाई से विजय होती है ॥ ३७ ॥

अथ कलिसहमस्य शुभाशुभफलमाह—

**कलिसद्म मिश्रखगदृष्टिसंयुतं यदि पापमूथशिलगं कलेर्मृतिम् ।**
**अथ तत्र सौम्यसहितावलोकिते जयमेति मिश्रदृशितः कलिव्यथे ॥३८॥**

कलीति। कलिः झकटकस्तस्य सहमं मिश्रखगैः शुभपापग्रहैर्दृष्टं संयुतं वा न भवति। तथा। यदि पापमुथशिलगं पापग्रहकृतमुथशिल-योगश्चेद्भवति। तदा कलेः कलहप्रसङ्गान्मृतिर्मरणं प्राप्नोति। अथेत्यनन्तरं तत्र कलिसहमे सौम्यैः शुभग्रहैः सहिते युक्तेऽवलोकिते दृष्टे वा सति कलौ कलहं जयमेति स्वोत्कर्षं प्राप्नोति। यदि मिश्रदृशितः शुभपापग्रहदृष्टि-श्चेद्भवति तदा कलिव्यथे कलिश्च व्यथा च कलिव्यथे, कलिः कलहः व्यथा दुःख च भवतः ॥३८॥

अब कलिसहम का शुभाशुभ फल बताते हुए कहते हैं—यदि कलिसहम शुभ तथा पाप ग्रह दोनों से दृष्ट या युक्त न हो और पाप ग्रहों का उसके साथ मुथशिल योग पड़ रहा हो तो लड़ाई-झगड़े से मृत्यु होने की सम्भावना रहती है। यदि कलिसहम शुभ ग्रहों से युक्त या अवलोकित हो तो लड़ाई में विजय प्राप्त होती है और यदि शुभ तथा पाप ग्रह दोनों की दृष्टि पड़ रही हो तो कलह और विवाद दोनों होता है ॥ ३८ ॥

अथ विवाहसहमस्य शुभाशुभफलमाह—

**विवाहसद्माधिपसौम्यदृष्टं युतं शुभैर्मूथशिलं शुभाप्तिम् ।**
**कुर्याद्यदा मिश्रसमेतदृष्टं कष्टादथ क्रूरमृतीश्वरैर्न ॥३९॥**

विवाहेति। विवाहसद्मसहममधिपेन स्वामिना युतं दृष्टं वा। तथाऽन्यैर्वा सौम्यैः शुभग्रहैर्दृष्टं युक्तं वा स्यात्तथा शुभैर्मुथशिलं शुभैः शुभग्रहकृतकृतमुथशिलयोगश्चेत्तदा शुभाप्ति विवाहप्राप्ति कुर्यात् यदा मिश्रसममेतद्दृष्टं मिश्रैः शुभाशुभग्रहैः युक्तं दृष्टं वा चेत्तदा कष्टात् क्लेशेन विवाहप्राप्ति कुर्यात्। अथ क्रूरैः पापैः विवाहसह युतं दृष्टं वा मुथशिलीकृतं वा तथा मृतीश्वरेण वर्षलग्नाद्विवाहसहमाद्वा अष्टमस्था-

धीश्वरेण युतं दृष्टं मुथशिलीकृतं वा स्यात्तदा न तस्मिन् वर्षे विवाहो नैव भवेत् ॥३९॥

अब विवाह सहम का शुभाशुभ फल बताते हुए कहते हैं--जिस मनुष्य के वर्षकाल में विवाह सहम अपने स्वामी से दृष्ट या युक्त हो अथवा मुथशिल योग करता हो या किसी अन्य शुभ ग्रह से देखा जाता हो तथा उनसे युक्त हो तथा मुथशिल योग करता हो तो शुभदायक होता है अर्थात् विवाहकार्य भली-भांति सम्पन्न हो जाता है। यदि शुभ-अशुभ दोनों प्रकार के ग्रहों से युक्त और दृष्ट हो या उनके साथ मुथशिल योग करता हो तो कठिनाई से कार्य सम्पन्न हो। यदि विवाह सहम पापग्रह से युक्त और दृष्ट हो और वर्षलग्न तथा अष्टम स्थान के अधिपति के साथ मुथशिल योग करता हो तो उस वर्ष विवाह नहीं होता ॥ ३९ ॥

अथ यशःसहमस्याशुभफलमाह--

**यशोऽधिपे नैधनगे खलेन युतेक्षिते सद्यशसो विनाशः।**
**पापार्जितस्यायशसोऽस्ति लाभो नष्टौजसि स्यात्कुलकीर्तिनाशः ॥४०॥**

यश इति। यशोऽधिपे यशः सहमस्वामिनि नैधनगेऽष्टमस्थानगते खलेन पापग्रहेण युते दृष्टे वा सति अनेककालार्जितस्य सद्यशसो विनाशः स्यात्। किन्तु पापसम्बन्धेनार्जितस्यायशसोऽस्ति लाभः। तादृशेऽष्टमस्थिते सति पुनर्नष्टौजसि अस्तङ्गते सति कुलकीर्तिनाशः स्यात् ॥४०॥

अब यशसहम का शुभाशुभ फल बताते हुए कहते हैं--यदि यशसहम का स्वामी अष्टम स्थान में बैठा हो और वह किसी पापग्रह से युक्त या दृष्ट हो तो बहुत समय का उपार्जित यश नष्ट हो जाता है और पापसंबन्ध से बहुत समय का अर्जित अपयश बढ़ जाता है। इस प्रकार यशसहम के स्वामी के अष्टम स्थान में स्थित रहने पर ही यदि वह अस्त हो जाय तो कुल की कीर्ति नष्ट हो जाती है ॥ ४० ॥

पुनरपि यशसहमस्य शुभाशुभफलमाह--

**शुभेत्थशाले शुभदृग्युते वा बलान्विते स्याद्यशसोऽभिवृद्धिः।**



**युद्धे जयो वाहनशस्त्रलाभः पापेसराफायशोऽर्थनाशः ॥४१॥**

शुभेति। यशःसहमपतिना सह शुभेत्थशाले शुभग्रहेण साकं मुथशिलयोगे सति शुभदृग्युते वा सति बलान्विते बलिष्ठे सति यशसोऽभिवृद्धिः स्यात्। तथा वाहनानां गजाश्वादीनां शस्त्राणां च लाभः स्यात्। तथा यशः सहमपतेः पापग्रहेण सह ईसराफयोगे सति अयशोऽर्थनाशश्च स्यात् ॥४१॥

अब अन्य प्रकार से यशसहम का शुभाशुभ फल बताते हुए कहते हैं—यदि यशसहम के स्वामी के साथ किसी शुभ ग्रह का मुथशिल योग हो रहा हो, शुभ ग्रह की दृष्टि पड़ रही हो अथवा वह शुभ ग्रह से युक्त और बली हो तो यश की वृद्धि होती है, युद्ध में विजय प्राप्त होता और विविध प्रकार के वाहन तथा अस्त्र, शस्त्र अनायास प्राप्त हो जाते हैं। यदि यशसहम का स्वामी पापग्रह के साथ ईसराफ योग कर रहा हो तो संसार में अपयश बढ़ता और धन नष्ट होता है ॥ ४१ ॥

अथाशासहमस्य शुभाशुभफलमाह--

**आशा तदीशश्च षडष्टरिःफविवर्जितः सौम्ययुतेक्षितश्च।**
**स्याद्वाञ्छितार्थाम्बरवाहनादिलाभः खलेक्षायुतितोऽतिदुःखम् ॥४२॥**

आशेति। आशासहमं लग्नात् षष्ठाष्टमरिःफवर्जितमेतत्स्थानं स्थितं न भवति। तथा तदीशश्च आशासहमाधिपतिश्च एतत्स्थानविवर्जितो द्वयमपि सौम्यैः शुभग्रहैर्युतैरीक्षितो दृष्टौ वा स्यातां तदा वाञ्छितानामर्थानां सुवर्णादिद्रव्याणामम्बराणां वाहनादीनां च लाभः स्यात्। खलेन पापग्रहेण दृष्टे युते सति तदा वाञ्छितार्थादीनामपि दुःखम् ॥४२॥

अब आशासहम का शुभाशुभ फल बताते हुए कहते हैं--यदि आशासहम का स्वामी छठें, आठवें, बारहवें स्थान से भिन्न किसी स्थान में बैठा हो और वह किसी शुभ ग्रह से युक्त या दृष्ट हो तो इच्छानुसार धन, वस्त्र और वाहन प्राप्त होते हैं। यदि सहमस्वामी किसी पाप ग्रह से दृष्ट या युक्त हो तो सब तरह से दुःख ही भोगना पड़ता है ॥ ४२ ॥

अथ रोगसहमस्याशुभफलमाह--

**मान्द्याधिपः पापयुतेक्षितश्च पापः स्वयं रोगकरो विचिन्त्यः।**
**चेदित्थशालो मृतिपेन मृत्युस्तदा भवेद्धीनबलेऽतिकष्टात् ॥४३॥**



मान्द्याधिप इति। मान्द्याधिपः रोगसहमाधीशः स्वयं पापग्रहः

